फलम् । श्रवणादिभिः प्रतिबन्धे निरस्ते तदेवापरोक्षरूपमविद्यानिवर्तकम् । संसारस्य मिथ्यात्वेन प्रमाणज्ञानैकनिवर्त्यत्वाद्ध्यानस्य प्रमाणज्ञानरूपत्वाभावेन नाविद्यानिवर्तकत्व-मिति ।

तन्न । 'आत्मा वा अरे द्रष्टव्यः' इत्यादिभिर्विधेयभूतस्य ध्यानस्यैवाविद्यानिवर्तकत्वं प्रतिपाद्यते । वाक्यार्थज्ञानं त्वविधेयं न तन्निवर्तकम्; उक्तज्ञानवतामप्यविद्यानिवृत्त्यदर्शनात् । भेदवासनादिरूपप्रतिबन्धकहेतूनामपि मिथ्यात्वेन वाक्यार्थज्ञानेन बाधावश्यम्भावात् वाक्यार्थ-ज्ञानस्य प्रतिबद्धफलत्वमप्यनुपपन्नम् ।

शब्दादपरोक्षज्ञानञ्च न क्वचिद्दृष्टम्; तस्य परोक्षधीमात्रहेतुत्वात् । संसारस्य सत्यतायास्समर्थितत्वेन तस्य ध्याननिवर्त्यत्वमप्युपपद्यते । तस्मान्न वाक्यार्थज्ञानं निश्श्रेय-सहेतुरिति ॥

अन्ये तु साङ्ख्ययोगावपवर्गसाधनम् । तत्त्वानामवधारणं साङ्ख्यं श्रवणादिरूपम् । योगस्य तु त्रिविधमनुष्ठानम् । ईश्वरार्थानां कर्मणां करणम्, इतरेषां त्यागः सर्वकर्मफल-त्यागश्चेति । 'तत्कारणं सांख्ययोगाधिगम्यम्' इति श्रुतेरुक्तार्थोऽवसीयते । परिव्राजकानां तु ज्ञानयोगमात्रम्, न कर्मेति ।

तन्न—'नान्यः पन्थाः' इति श्रुत्या वेदनेतरस्यापवर्गोपायत्वप्रतिषेधात् । 'तत्कारणम्' इत्युदाहृतश्रुत्या ज्ञानकर्मयोगाभ्यां परमात्मसाक्षात्कारो भवतीत्येतावन्मात्रमुच्यते, न पुनरप-वर्गफले समुच्चयो विधीयते । 'अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' इति कर्मज्ञानयोः फलभेदाभिधानान्नापवर्गफले तयोस्समुच्चयः। अत्र विद्याविद्याशब्दाभ्यां ज्ञानकर्मणी अभिधीयेते।

त्रय्यन्तनिष्णातास्त्वेवमभिदधति—'ब्रह्मविदाप्नोति परम्' इत्यादिभिर्वाक्या-र्थज्ञानविलक्षणं ध्यानोपासनादिशब्दवाच्यं साक्षात्कारसदृशं प्रीतिरूपापन्नं वेदनमपवर्गो-पायतया विधीयते । तस्य च वेदनस्य विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्ष-

रूपसाधनसप्तकात् प्राप्तिरिति ब्रह्मनन्दिना प्रतिपादितम् ‘ तल्लब्धिर्विवेकविमोकाभ्यास-क्रियाकल्याणानवसादानुद्धर्षेभ्यः ’ इति। अत उक्तलक्षणं वेदनमेव निश्श्रेयससाधनम्।

एवं प्रपत्तिरप्युक्तध्यानासमर्थानामुपायः ; ‘ मुमुक्षुर्वै शरणमहं प्रपद्ये ; ‘ शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः। तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ’ इत्यादि-प्रमाणात्। सा च भगवदेकोपायत्वप्रार्थनात्मिका। तस्माद्यथाधिकारं भक्तिः प्रपत्तिर्वा उपाय इति।

॥ इति निश्श्रेयससाधननिर्णयाधिकारो नवमः ॥



अथ दशमे निश्श्रेयसनिर्णयाधिकारे निश्श्रेयसस्वरूपं निर्णीयते। अत्र पूर्वपक्षिणो बौद्धार्हतवैशेषिकप्राभाकरभाट्टशाङ्करभास्करादयः। तत्र बौद्धैकदेशिनो माध्यमिकाः प्रकृष्टशून्यभावनया शून्यभावापत्तिं मोक्षमाचक्षते। योगाचारादयस्तु क्षणिकत्वभावनया विषयोपरागरहितज्ञानसन्तानम्।

एतेषां पक्षे बन्धमोक्षभागिनस्स्थिरस्य भोक्तुरभावान्मोक्षो दुर्घटः।

आर्हतास्तु—सम्यग्दर्शनचारित्रैः प्रक्षीणाशेषमलस्याविर्भूतसकलगुणस्य लोकान्तरेऽवस्थितिर्मोक्ष इत्याहुः। तन्न, स्वयं परिणामरहितस्य भोक्तुर्गमनानुपपत्तेर्गमनपूर्वकलोकान्त-रावस्थानलक्षणमोक्षस्य दुर्वचत्वात्।

वैशेषिकाः प्राभाकराश्च निश्शेषात्मगुणोच्छेदं मोक्षमातिष्ठन्ते। इदमपि न; सुखानुभवाभावात्। दुःखाभावस्याप्यननुभाव्यत्वेनापुरुषार्थत्वात्। न हि पाषाणादेर्दुःखाभावः पुरुषार्थतया प्रसिद्धः।

भाट्टास्तु मनस्करणकेन ज्ञानेन आनन्दानुभवं कैवल्यं मन्यन्ते। एतदपि न; मोक्षदशायां करणाधीनज्ञानाभावेन शब्दादिविषयाभावेन च ज्ञानसुखयोरसम्भवात् आनन्दानुभवस्य दुर्घटत्वात्।

अद्वैतिनस्तु—अविद्यानिवृत्तिं मोक्षं सङ्गिरन्ते। तत्र यद्यविद्याप्रध्वंसोऽविद्यानिवृत्तिः, तदा ध्वंसस्य द्रव्यावस्थाविशेषरूपत्वेन, तेनावस्थाविशेषापन्नद्रव्येण सद्वितीयत्वापत्तिः। अविद्याया द्रव्यत्वाभावे तत्कार्यप्रपञ्चस्यापि द्रव्यत्वं न स्यात्। अविद्यानिवृत्तेर्ब्रह्मस्वरूपत्वे नित्यत्वेन तस्य तत्त्वज्ञानसाध्यत्वन्न स्यात्'। बन्धाभावश्च प्रसज्यत इति।

भास्करादयस्तु उपाधिनिवृत्तौ जीवस्य ब्रह्मभावो मोक्ष इति ब्रुवते। तन्न, विलक्षणस्य द्रव्यस्य कदापि द्रव्यान्तराभेदासम्भवात्। जीवपरमात्मनोश्च मुक्तिदशायामपि भेदश्श्रूयते 'ब्रह्मविदाप्नोति परम्' 'परात्परं पुरुषमुपैति दिव्यम्' इत्यादिभिः। अतोऽयमपि पक्षो नोपपद्यते।

किन्तु निश्शेषप्रक्षीणकर्मणः विदुषः मूर्धन्यनाड्या उत्क्रान्तस्य ब्रह्मोपसम्पन्नस्य 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुत्या स्वाभाविकापहतपाप्मत्वादिगुणाविर्भावोऽवगम्यते। एवं रूपस्य तस्य 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा' इति श्रुत्या अनन्तकल्याणगुणविशिष्टब्रह्मानुभव एव मोक्ष इति प्रतिपाद्यते। एवं मुक्तस्य जगद्व्यापारवर्जं भगवदैश्वर्यं समानम्। 'एतेन प्रतिपद्यमाना इमम्मानवमावर्तं नावर्तन्ते' इति श्रुत्या निश्श्रेयसस्य नित्यत्वमवगम्यते। तदेवमसङ्कुचितो ब्रह्मानुभवो मोक्ष. इति सर्वं समञ्जसम्॥

॥ इति निश्श्रेयसनिर्णयाधिकरो दशमः॥

वादार्थसग्रहस्सम्पूर्णः॥

प्रीयता वासुदेव.



श्रीः

## नीतिमालाविषयानुक्रमणी.



पु.

### प्रथमो वादः

पृ.

## द्वितीयो वादः



## तृतीयो वादः

## चतुर्थो वादः



## पञ्चमो वादः

## सप्तमो वादः

## नवमो वादः

## दशमो वादः





श्रीः

॥ श्रीमते रामानुजाय नमः ॥

# ॥ नारायणार्यैः अनुगृहीता नीतिमाला ॥

## ॥ प्रथमो वादः ॥



वस्त्वाविरस्तु पद्माक्षं मम श्रीधरमच्युतम् ।
अबुद्ध्यधीनसन्दर्भभारतीमूर्धभूषणम् ॥

उन्मीलयन्ति चैतन्यचक्षुर्येऽहेतुकं मम ।
हृदि [1]सन्निदधीरंस्ते गुरवः करुणाश्रयाः ॥

वेलां लीलाविभूतिं प्रबलमितिशिलाराशिभिः पूर्वक्लृप्तां
ब्रह्माम्भोधेर्विषाणैः कुनयकुलमयैर्भेत्तुमुद्युञ्जते ये ।
तान्वादीभान्सुतीक्ष्णैर्नयकुलकरजैः पाटयल्लक्ष्मणार्यः[2]
पद्मास्यो रङ्गधामक्षितिधरनिलयो मङ्गळं मे विधत्ताम् ॥

मुनीन्द्रपारिजातोत्थसुनीतिकुसुमैरहम् ।
मालां ग्रथ्नामि रङ्गेशवरिवस्या[3]विधित्सया ॥

पौर्वापर्यस्य नियमः कर्मब्रह्मविचारयोः ।
तथा वेदान्तवाक्यानामप्रामाण्यनिराक्रिया ॥

१. सन्निदधुस्ते मे—पा०.

२. लक्ष्मणाख्यः—पा०.

३. परिचर्या—पा०.

विवर्तपक्षक्षपणं परिणामनिराकृतिः ।
शक्तिविक्षेपभङ्गश्च ब्रह्मणो निर्णयस्तथा ॥

निर्णयः पुरुषस्यापि विधिरूपविनिर्णयः ।
मोक्षसाधननिर्णीतिर्मोक्षस्य च विनिर्णयः ॥

[१]दशार्थानधिकृत्येयं **नीतिमाला** प्रवर्तते ।
दोषानत्र तिरस्कृत्य गृह्यन्तां सूरिभिर्गुणाः ॥

ब्रह्मभागविचारस्य कर्मभागविचारानन्तर्यं सूत्रितम्—'अथातो ब्रह्मजिज्ञासा' इति। तत्र केचिदाहुः—

त्रय्यन्तार्थविचारस्तु तदध्ययनपूर्वकः ।
तदधीनात्मलाभत्वात्त्रयीवाक्यविचारवत् ।

अनधीतवेदस्य विचारानुपपत्तेर्धर्मजिज्ञासाया वेदाध्ययनपूर्वकत्वं यथा, तथा ब्रह्मजिज्ञासाया अपि वेदान्ताध्ययनपूर्वकत्वमेव युक्तम् । अथाध्ययनक्रमानुरोधेन कर्मभागविचारानन्तर्यं ब्रह्मभागविचारस्योच्यते, तदयुक्तम् ; भिन्नाधिकारत्वात्कर्मब्रह्मभागयोः । स्वर्गादिसाधनभूतयागादिकर्मप्रतिपाद्य(द?)कस्त्रयीभागो बुभुक्षाधिकारः। परब्रह्मतत्प्रासितदुपायभूततदुपासनविषयो वेदान्तभागो मुमुक्षाधिकारः । अतो मुमुक्षुभिर्वेदान्ताध्ययनानन्तरं ब्रह्मविचारः कर्तव्यः ।

यद्यप्युद्गीथादीनां कर्माङ्गित्वादिविचाराय[२] (कर्माङ्गत्वादिविचाराय?) उपासनचिन्तायाः शारीरके क्रियमाणायाः कर्मविचारोऽपेक्षितः, तथापि तेषामुपासनानां वीर्यवत्तरत्वादिफलत्वाद्ब्रह्मविचारं कृत्वापि क्रियमाणः कर्मविचारो न विरोधमावहेत् ।

ननु चार्थज्ञानपर्यन्तमध्ययनं विदधतो विधेर्बलेन मुमुक्षुणापि प्रथमं कर्मविचारस्य कर्तव्यत्वात्तदानन्तर्यं ब्रह्मविचारस्यावर्जनीयमापतेत् । नैवम्; अक्षरग्रहणमात्रपर्यवसानादध्ययन-

१. दर्शनार्थानिमान्वक्तुम्—पा०.
२. कर्माङ्गित्वाद्विचाराय—पा०.

विधेः । तथाहि—अध्ययनानन्तरभावित्वादक्षरग्रहणस्य तदेव तस्य फलं भवितुमर्हति, न त्वनेन व्यवहितमर्थज्ञानम् । अक्षरग्रहणस्याप्यपुरुषार्थत्वादनुद्देश्यत्वमुच्यमानमर्थज्ञानस्यापि समानम् । नन्वर्थज्ञानस्य स्वरूपेणापुरुषार्थत्वेऽपि स्वर्गादिपुरुषार्थसाधनत्वेनोद्देश्यत्वं सम्भवतीति चेन्न ; अनुष्ठानसाध्यत्वात्स्वर्गादेः । अथानुष्ठानमर्थज्ञानस्यावान्तरव्यापार इति मतम् , तथासत्यध्ययनानन्तरभाविनोऽक्षरग्रहणस्य स्वर्गादिसाधनतयोद्देश्यत्वमुपपन्नमिति तदुत्तरकालभाविनी [१]अर्थज्ञानानुष्ठाने[२] तस्यावान्तरव्यापारतामनुभवत इति सन्तोष्टव्यम् ।

गृहीतस्वाध्याये पुरुषेऽधीतवेदत्वप्रसिद्धेश्चाक्षरग्रहणफलमध्ययनम् । अधीतवेदो हि श्रोत्रियः। न हि गृहीतस्वाध्यायमश्रुतमीमांसं श्रोत्रिय इति न वदन्ति । व्यापकत्वाच्चाक्षरग्रहणमेव फलमध्ययनस्य । नह्यध्ययनसंस्कृतानि वेदवाक्यानि न ग्रहणगोचरतां भजन्ते । अध्ययनकर्मत्वमपि स्वाध्यायस्येप्सिततमत्वात् स्वशक्त्या धर्मार्थकामादिपुरुषार्थतत्साधनावबोधित्वात् स्वरूपेण जपपारायणादिनाभीष्टसाधनत्वाच्च । एवमाकारभेदेनोभयार्थत्वाद्विनियुक्तविनियोगदोषो न स्यात् ; यथाग्नेर्दाहभासमानत्वयोः ।

ननु अर्थज्ञानस्यावैधत्वे स्वाध्यायाध्ययनानन्तर्यं मीमांसाया न स्यात्; 'अधीत्य स्नायात्' इति स्मृतिप्राप्तेन स्नानेन प्रस्तावसरत्वात् । अतोऽर्थविचारस्याध्ययनानन्तर्यसिद्धये तत्कालोपनिपातिस्नानबाधार्थमनिच्छतोऽपि वैधत्वमङ्गीकरणीयमापद्येत ।

नैवम् ; अर्थविचारस्य रागप्राप्तत्वादेव न तावद्वैधत्वम् । स्नानस्मृतिस्तु न विचारं बाधितुं क्षमते; रागबलाद् गुरुगृहान्निवृत्तेन कर्तुं शक्यत्वात् । अतः प्राक्तनीं स्थितिमुपजीव्य [३]विचारः प्रवर्तिष्यते । अध्ययनस्य समाप्तत्वात्सकलब्रह्मचारिवृत्तिनिवृत्तिः स्नातकस्य भवति । उत्तरक्रतुविधयोऽप्यविद्वत्त्वत्तया नैनमास्कन्दन्ति ।

अथवा अधीत्येत्यत्र क्त्वाप्रत्ययस्य पूर्वकालतामात्रविहितत्वात् स्नानस्मृतिविचारयोर्न विरोधः। अथवा अध्ययनार्थविचारयोरानन्तर्यनियमो नास्माकमवश्यम्भावी । अधीतवेदत्वमेव हि

१—२. द्विवचनान्ते इमे—पदे.

३. विचारे—पा०.

विचारस्यापेक्षितम् । तदध्ययनस्य पूर्वभावित्वमात्रेणापि सिद्ध्यतीति स्मृत्यनुसारेण स्नात्वापि विचारयिष्यति ।

ननु च 'स्नातकस्सदृशी भार्यां विन्देत' इति स्नानोत्तरकालस्य दारसङ्ग्रहणावरुद्धत्वात्तत्रापि न विचारः कर्तुं शक्यते । तर्हि कृतदारो विचारयिष्यति, तदा ह्यर्थार्जनवदर्थविचारोऽप्यहरहः क्रियमाणो न विरोधमावहेत् । अनर्थकानां हुम्फडित्यादिवाक्यानामध्ययनस्यार्थज्ञानप्रयोजनत्वाभावाददृष्टफलत्वमक्षरग्रहणफलत्वं वाभ्युपेयं स्यात् । तदा विधिवैरूप्यं भवति । किञ्च सत्रबृहस्पतिसवादिषु क्षत्रियवैश्ययोरनधिकारात्तत्प्रतिपादकस्य वेदभागस्याध्ययनं वाक्षरग्रहणादिफलत्वं (ध्ययनमदृष्टफलमक्षरग्रहणादिफलं ?) वा स्यात् । न चाविधेयत्वेऽर्थविचारो निर्निबन्धनस्स्यादिति वक्तुं शक्यम् ; अन्यनिबन्धनत्वादर्थविचारस्य । विधिरपि पुरुषार्थमविरोधयन्नेव[१] प्रवृत्तिहेतुर्भवति । इहापि साङ्गाध्ययनेन वेदवाक्येभ्यः प्रयोजनवदर्थानामापाततः प्रतीतेस्तन्निर्णयफले विचारे पुरुषः स्वयमेव प्रवर्तते । अतः साङ्गाध्ययनादेवाक्षरग्रहणफलात्प्रयोजनवदर्थावबोधकामनाद्वारेणार्थविचारे प्रवृत्तेर्नार्थविचारो निर्निबन्धनः । अर्थज्ञानस्याविधेयत्वेऽपि स्वाध्यायस्यार्थपरत्वं स्वतःप्रामाण्यन्यायसिद्धम् । अतो मुमुक्षोर्ब्रह्मविचारेऽध्ययनविधेरप्रतिबन्धकत्वेन मुमुक्षुणा अध्ययनानन्तरं ब्रह्मविचारः कर्तव्य इति कर्मविचारानन्तर्यं ब्रह्मविचारस्य न युक्तमिति ॥

अत्राभिधीयते—

> यज्ञादीनां तु विद्याया उत्पत्तौ विनियोगतः ।
> तेषामकरणे दोषबाहुल्यश्रवणादपि ॥
>
> पूर्वकाण्डोदितन्यायसापेक्षत्वस्य दर्शनात् ।
> विचारः कर्मणां हेतुर्ब्रह्मभागविचारणे ॥

यदुक्तमध्ययनविधेरक्षरग्रहणपर्यवसानान्न तन्निबन्धनोऽर्थविचारः, साङ्गाध्ययनादेव प्रयोजनवदर्थानामापातप्रतीतेस्तन्निबन्धनोऽर्थविचार इति ; तत्सुष्ठूक्तम् ।

१. मवबोधयन्नेव—पा०.

यत्तु कर्मज्ञानभागयोर्भिन्नाधिकारत्वान्मुमुक्षोर्न कर्मविचारापेक्षेति ; तदपेशलम्; 'यज्ञेन दानेन तपसा अनाशकेन' इत्यादिभिर्यज्ञादीनां साधनत्वेन विद्योत्पत्तौ विनियोगात्। विविदिषन्तीति वचनाद्विविदिषायां यज्ञादीनामुपयोगः न विद्योत्पत्ताविति चेन्न ; विविदिषायास्साध्यत्वस्यैवासम्भवात्। पुरुषार्थस्तत्साधनं वा साध्यम्। न तावद्विविदिषा पुरुषार्थः; नापि तत्साधनम् ; 'ब्रह्म वेद ब्रह्मैव भवति' इति विद्याया एव पुरुषार्थसाधनत्वश्रवणात्। अत एव विविदिषा अर्थसिद्धेति न सा पुरुषव्यापारेण साध्या। विविदिषन्तीति व्यपदेशस्तु अश्वेन जिगमिषतीतिवत् द्रष्टव्यः ॥

ननु वेदनस्य वा कथं कर्मसाध्यत्वम्? तदपि [१]प्रमाणाधीनम्। तत् स्वसामग्रीभूताद्वेदान्तवाक्याज्जायत इति किमिति कर्माण्यपेक्षते। तेषां वा कथं प्रमाणसामग्रीत्वम्? उच्यते—नास्माभिर्वाक्यजन्यं ज्ञानं यज्ञादिसाध्यमुच्यते। अपि तु उपासनात्मकं ज्ञानम्। तत्तु फलाभिसन्धिरहितैः परमपुरुषाराधनभूतैः कर्मभिः परिशुद्धान्तःकरणस्य जायत इति युक्तं तस्य यज्ञादिसाध्यत्वम्।

ननु अस्तूपासनस्य यज्ञादिसाध्यत्वात्तस्य तदपेक्षितत्वम् ; कर्मब्रह्मविचारयोः कथं पौर्वापर्यनियमः? उच्यते—ब्रह्मस्वरूपतदुपासनतत्फलानि त्रीण्यपि शारीरके चिन्त्यन्ते। तत्रोपसानविचारवत्तदुपायभूतकर्मविचारोऽप्यपेक्षितत्वात्कर्तव्य एव। कर्मविचारस्य कर्तव्यतायां सत्यां कर्मणां साधनत्वात्तद्विचारस्यैव प्राथम्यमुचितम्। [२]अनिर्णीते साधने साध्यनिर्णयानुपपत्तेः। अत एव पूर्वकाण्डे स्वर्गादिफलचिन्तायाः प्रागेव साधनभूतयागादिचिन्ता क्रियते। अतः कर्मब्रह्मभागविचारयोः पौर्वापर्यमुपपन्नम्।

किञ्च नित्यनैमित्तिकानां कर्मणामकरणे प्रत्यवायबाहुल्यं श्रुतिभिरुद्घुष्यते। अतो मुमुक्षुरपि कर्मविचारे प्रथमं प्रयतते। अनर्थं परिहृत्यैव ह्यभ्युदये यतितव्यम्।

अपि च सद्विद्यादहरविद्यादीनां भेदाभेदनिर्णयः कर्मभेदाभेदनिर्णयहेतुभिर्न्यायैः शारीरके क्रियते। उक्तञ्च भगवता **बादरायणेन**—'हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्द-

१. तदपि प्रमाणज्ञानम्—पा०.
२. अननुष्ठिते—पा०.

स्तुत्युपगानवत्तदुक्तम्[१]' 'प्रदानवदेव तदुक्तम्[२]' इत्यादि। अतः कर्मविचारस्यैव पूर्ववृत्तत्वं युक्तम्।

केचिदाहुः—

अद्वितीयात्मविज्ञानमविद्याविनिवर्तकम्।
श्रूयते तस्य चोत्पत्तौ समाधिः कारणं श्रुतौ॥

औचित्याच्च विरुद्धत्वाच्छमादेः कर्मणामपि।
शमाद्यनन्तरं कर्तुं युक्तं ब्रह्मविचारणम्॥

'एकधैवानुद्रष्टव्यम्' 'तरति शोकमात्मवित्' इत्यादिभिरद्वितीयात्मविज्ञानमपवर्गसाधनतया श्रुतम्। तस्य 'शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वात्मन्येवात्मानं पश्येत्' इति शमादीनां साधनत्वं च श्रुतम्। यज्ञादिकर्मणां साधनत्वश्रवणेऽपि करणेतिकर्तव्यताद्यनेकभेदगर्भत्वेनाद्वितीयत्वज्ञानं प्रति तेषां साधनभावो नोपपद्यते। शमादीनां तु सर्वेन्द्रियव्यापारोपरतिरूपाणां साधनत्वमुपपन्नम्। तस्माच्छमाद्यानन्तर्यं ब्रह्मविचारस्यौचित्याद(यु?)क्तम्।

उच्यते—

दिव्यदेहविभूत्यादिविशिष्टब्रह्मवेदनम्।
साधनं त्वपवर्गस्य बह्वीषु श्रुतिषु श्रुतम्॥

तृतीयाश्रुतिसामर्थ्यात्तस्य कर्मादि साधनम्।
शमादयः परिकरा विरोधो न च विद्यते॥

यदुक्तम्—अद्वितीयात्मविज्ञानमपवर्गस्य साधनमिति। तत्राद्वितीयत्वं विवेचनीयम्। यदि निर्विशेषत्वमद्वितीयत्वम्, तत्सर्वप्रमाणविरूद्धम्। अथ अनेकगुणविभूतिविशिष्टस्य ब्रह्मण एकत्वम्, तदभिमतमेव। तथाविधस्य ब्रह्मणो वेदनमपवर्गसाधनतया अम्नायते च—'य एषो-

१. ब्र. सू. ३. ३. २६.
२. ब्र. सू. ३. ३. ४२.

ऽन्तरादित्ये हिरण्मयः पुरुषः दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः। उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद', 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा', 'पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इत्यादिभिः। स्मर्यते च—

प्रशासितारं सर्वेषामणीयांसमणीयसाम्।
रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्॥

इति। एवं तर्हि 'एकधैवानुद्रष्टव्यम्' इत्यादिश्रुतेरर्थो वर्णनीयः। न वयं व्याख्यातारः। व्याख्यातञ्च भगवता **भाष्यकारेण।** तत्रैवानुसन्धध्वम्। एवंविधं ब्रह्मणो वेदनं कर्मानुष्ठानसाध्यमुक्तम्।

यत्तु शमादीनां वेदनसाधनत्वं 'शान्तो दान्तः' इत्यादि श्रुतिसिद्धमिति; तदपि न। 'यज्ञेन दानेन' इति तृतीयया श्रुत्या यज्ञादेः साधनत्वेन विनियोगात् 'शान्तो दान्तः' इत्यादिवचनं शमादीनामनुग्राहकत्वाभिप्रायम्। व्यापारसाध्यानां कर्मणां तदुपरतिरूपाणां शमादीनाञ्च विरोधादेककार्यान्वयो न सम्भवतीत्येतदपि नास्ति; विषयभेदात्। विद्यासाधनभूतकर्मविषयो व्यापारः। अविहिताप्रतिषिद्धकाम्यनिषिद्धकर्मविषयाः शमादय इति। तदेवं कर्मसापेक्षत्वाद्ब्रह्मज्ञानस्य कर्मविचारानन्तरं ब्रह्मविचारः कर्तव्य इति सूत्रितम्॥

इति नीतिमालायां ब्रह्मविचारस्य
कर्मविचारानन्तर्यनिर्णयाधिकारः प्रथमः॥

———

श्रीः

# नीतिमालायां

## द्वितीयाधिकार आरभ्यते.

वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यमसहमानाः केचिदाहुः—

सम्बन्धग्रहणापेक्षं शब्दादर्थावबोधनम् ।
तच्च कार्यार्थ एवेति न शास्त्रं ब्रह्मगोचरम् ॥

शब्दार्थयोस्सम्बन्धमजानतः पुरुषस्य शब्दो नार्थप्रत्ययहेतुर्भवति। सम्बन्धश्च वृद्धव्यवहारत एव ग्रहीतव्यः। व्यवहारश्च कार्यैकगोचरः। तथा हि—गामानयेत्यादि-प्रयोजकवाक्यश्रवणसमनन्तरं प्रवर्तमानं प्रयोज्यमुपलभ्य पार्श्वस्थो व्युत्पित्सुरेवमवधारयति, अहं कार्यावगतिसमनन्तरं सर्वथा(दा?) प्रवर्ते । अस्याप्येतद्वाक्यश्रवणसमनन्तरं प्रवर्तमान-त्वादिह(दिदं?) वाक्यमस्य कार्यज्ञानबुद्धिमुत्पादयतीति। पुनर्गवानयनदर्शनात्कार्यविशेषं निश्चि-नोति। पुनरपि गां बधानेत्यादिप्रयोगभेदात्पदानामावापोद्वापवशेनावयवार्थमवगच्छति। एव कार्यार्थ एव व्युत्पत्तेर्न सिद्धार्थे शब्दस्य प्रामाण्यम् ।

न च 'पुत्रस्ते जातः' इत्यादि वाक्यश्रवणसमनन्तरं मुखविकासादिलिङ्गेन पुत्रजन्मा-द्यर्थनिश्चयसम्भवात्कार्यार्थ एव सम्बन्धग्रहणमिति नियमो नास्तीति वाच्यम्; तत्रापि सुखप्रसवाद्यर्थानां हर्षहेतूनां बहूनां सम्भवाद्धर्षहेतुविशेषनिश्चयहेतुत्वायोगान्मुखविकासादेः। एवं कार्यार्थ एव व्युत्पत्तेस्सर्वशब्दानां कार्य एव प्रामाण्यमिति सिद्धरूपे ब्रह्मणि न वेदान्त-वाक्यानां प्रामाण्यमिति ।

अत्राभिधीयते—

सिद्धार्थेष्वपि वाक्येषु सम्बन्धग्रहणं भवेत् ।
तस्मात्कार्यार्थ एवेति निर्बन्धो निर्निबन्धनः ॥

'पुत्रस्ते जातः' इत्यादि सिद्धार्थेष्वपि वाक्येषु सम्बन्धग्रहणं दृश्यत एव। यदुक्तं मुखविकासादिलिङ्गस्य हर्षहेतुविशेषनिश्चयहेतुत्वं न सम्भवतीति। तन्न; एतद्वाक्यश्रवणानन्तरं पुत्रजन्मसाक्षात्कारेण तदसाधारणोत्सवत्व(त्सव ?)लिङ्गेन वा पुत्रजन्मविशेषनिश्चयसम्भवात्। साधारणतयावगतस्य हर्षहेतुविकासस्य पुत्रजन्मविशेषपर्यवसानसम्भवे सति अनिर्धारितहेत्वन्तरविषयत्वशङ्कानुपपत्तेश्च।

किञ्च गामानयेत्यादिवाक्यसमनन्तरं प्रयोज्यस्यानुषङ्गिकानेकव्यापारसम्भवात्कार्यविज्ञानमपि सामान्येनावगतमिति तत्र विशेषावधारणं दुश्शकमेव। अपि चायं व्युत्पित्सुः स्वस्य प्रवृत्तिहेतुभूतायाः कार्यावगतेः पदार्थविज्ञानपूर्वकत्वावगमात्प्रयोज्यवृद्धस्यापि प्रयोजकवाक्यं पदार्थज्ञानमुत्पादयतीति निश्चिनोति। तस्माद् वृद्धव्यवहारेऽपि सिद्धार्थेष्वेव शब्दस्याभिधानमिति निश्चयः।

किञ्च प्रकारान्तरेणापि शब्दार्थसम्बन्धग्रहणं प्रचुरमुपलभ्यते। तथाहि—बालाः पितृमातुलादिभिः शशिपशुपक्षिप्रभृतीनर्थानुद्दिश्य [१]'एनमवेहि, [२]इममवगच्छ' इत्यभिप्रायेणाङ्गुल्या निर्दिश्य तत्तच्छब्दैस्तेषु तेष्वर्थेषु प्रयुज्यमानैर्बहुशः शिक्षिताः, पुनश्च काव्यनाटकाभिज्ञपुरुषसकाशमुपगम्य पदविच्छेदं कृत्वा अस्य शब्दस्यायमर्थ इति शिक्षिताः, सर्वशब्दानामर्थमवगम्य तत्तच्छब्दश्रवणसमनन्तरं तेषु तेष्वर्थेषु स्वात्मनां बुद्ध्युत्पत्तिं दृष्ट्वा सम्बन्धान्तरादर्शनात्सङ्केतयितृपुरुषाज्ञानाच्च तेषु तेषु तेषां (तेषां तेषां?) शब्दानां प्रयोगोबोधकत्वनिबन्धन इति निश्चिन्वन्ति। अतः सिद्धार्थे व्युत्पत्तेस्तस्मिन् शब्दस्य प्रामाण्यं सम्भवतीति वेदान्तवाक्यानि ब्रह्मणि प्रामाण्यं प्रतिपद्यन्त एव।

अपर आहुः—

> जगत्सावयवं कार्यं तच्च स्वोचितकर्तृकम्।
> कर्ता च कल्प्य एकोऽतो नासौ शास्त्रप्रमाणकः॥

१. एन शब्दम्—पा०.

२. इममर्थम्—पा०.

अस्तु सिद्धार्थेऽपि शब्दस्य प्रामाण्यम्, तथापि जगत्कारणभूत ईश्वरो न शास्त्रप्रमाणकः; शास्त्रस्य प्रमाणान्तराप्राप्तार्थविषयत्वात्। अनुमानेन जगत्कर्तृसिद्धेश्च। तथाहि—विचित्र-सन्निवेशं भूभूधरादिकं कृत्स्नं जगत् सावयवत्वात् कार्यं भवितुमर्हति। कार्यञ्च स्वोपादानोपकरणसम्प्रदानप्रयोजनाद्यभिज्ञकर्तृकं दृष्टम्। न चेदमशक्यक्रियमशक्योपादानादिविज्ञानम्; कर्तृस्वरूपवज्ज्ञानशक्त्योरपि कार्यानुमेयत्वात्। न च जीवानां कर्तृत्वकल्पनं युक्तम्; तेषां [१]प्रतिसर्गावस्थायां प्रलीनकरणकळेबरतया अचित्कल्पानां ज्ञानशक्तिवैकल्येन विचित्र-जगन्निर्मातृत्वानुपपत्तेः।

यदपि तेषामेव कर्मद्वारेण कर्तृत्वमुपपद्यत इति, तदपि न; युगपदुत्पद्यमान-[२] जगन्निर्माणप्रयोजनतया अनन्तैर्जीवैरेकदानुष्ठितानामनन्तानामेकरूपाणां कर्मणां सम्भवे प्रमाणाभावात्ततो विलक्षणज्ञानशक्तियुक्त एकः कर्ता भवितुमर्हति।

अथ विचित्रसन्निवेशगोपुरप्राकारादेर्विलक्षणज्ञानशक्तियुक्तानेककर्तृकत्वदर्शनादत्यन्त-विचित्ररचनस्य जगतो निरतिशयज्ञानशक्तियुक्तबहुकर्तृकत्वकल्पनं युक्तमिति चेत्, तच्चा-युक्तम्; कर्तृकल्पनायामनेककल्पनादेककल्पनस्यैव युक्तत्वात्। न च जगत्कर्तुरनुमेयत्वे व्याप्तिबलेन कर्मवश्यत्वादिप्रसङ्गः; तेषां कर्मवश्यत्वादीनां जगत्करणेऽनुपयोगात्। अनुप-योगा(गि?)नामपि व्याप्तिमात्रेण पक्षप्राप्तौ सर्वानुमानोच्छेदप्रसङ्गाच्च। अतो जगत्कर्तुरनु-मानसिद्धत्वान्न वेदान्तप्रमाणकं ब्रह्मेति।

अत्रोच्यते—

> जगतः कर्तृमत्त्वञ्च सिद्ध्यत्येवानुमानतः।
> विशिष्टकर्तृकत्वन्तु शास्त्रादेवावगम्यते॥

यदुक्तं विचित्ररचनस्य जगत्कार्यस्य विचित्रलक्षणैककर्तृकत्वं सिद्ध्यतीति, तदयुक्तम्; विचित्र-रचनस्य रथगोपुरप्रासादादेर्बहुकर्तृकत्वदर्शनात्। तत्र यदुक्तमनेककर्तृकल्पनादेककल्पनं लघीय

१. प्रतिसर्गः—प्रळयः.

२. युगपदुपपद्यमान—पा०.

इति, तदप्यसाधु ; पूर्वोक्तादेव च हेतोर्बहुकर्तृकल्पनस्यैव युक्तत्वात्। कार्यसिद्धये हि कर्तृमत्त्वं कल्प्यते तद्यथोपपद्यते तथैव हि कल्पनीयम् ।

किञ्च अनुमानेन जगत्कर्तारं साधयतो यत्कर्तुरकर्मवश्यत्वसर्वज्ञत्वादिकं सिषाधयिषितम्, तदपि विरुद्धमापतेत्; व्याप्तिबलेन तस्य कर्तुः कर्मवश्यत्वाल्पज्ञानत्वादेः साधकत्वाद्धेतोः। तत्र यदुक्तं सपक्षे सहदृष्टानां धर्माणां दर्शनमात्रेण पक्षे प्राप्तौ सर्वानुमानोच्छेदप्रसङ्ग इति ; नैतदस्ति। व्याप्तिबलेन पक्षे प्रसज्यमानानां येषां प्रमाणान्तरेण न प्रतिहतिर्भवति, तेषामेवानुमापकत्वाल्लिङ्गस्य ।

अथ कर्मवश्यस्य अल्पज्ञस्य सकलजगन्निर्माणानुपपत्तेः पक्षधर्मत्वबलादेवाकर्मवश्यः सर्वज्ञ एव जगत्कर्ता सेत्स्यतीति मतम्, तदप्ययुक्तम् ; अकर्मवश्यस्य शरीरेन्द्रियाद्युपकरणाभावेन जगत्कर्तृत्वानुपपत्तेः। शरीरेन्द्रियाद्युपकरणरहितस्यापि सङ्कल्पमात्रेण कर्तृत्वमुपपद्यत इति चायुक्तम् ; अशरीरस्य सङ्कल्पायोगात्। अत एवेच्छानिमित्तशरीराद्युपकरणवान् जगत्करोतीत्युत्प्रेक्षितुमपि न शक्यम् ।

अथ नित्यानि जगत्कर्तुः शरीरेन्द्रियाद्युपकरणानि ; अतस्तस्य जगत्करणं सुशकमिति मन्वीत, तदपि न साधीयः ; नित्यत्वेन तस्य शरीरादीनां सावयवत्वहेतोरनैकान्तिकत्वात्। अतोऽनुमानेन जगत्कर्ता न सेत्स्यति। जगतो विलक्षणैककर्तृमत्त्वे सिद्धेऽपि निमित्तोपादानशक्तियुक्तेनैकेन पुरुषेणैकदैव सङ्कल्पपूर्वकं निखिलजगत्करणं शास्त्रैकप्रमाणकमिति वेदान्तवेद्यं ब्रह्म ।

अन्ये पुनराहुः—

प्रयोजनपरं वाक्यं प्रमाणं नेतरद्भवेत् ।
तत्प्रवृत्तिनिवृत्तिभ्यामेव साध्यं प्रयोजनम् ॥

त्रय्यन्तस्याक्रियार्थत्वान्न स्यात्तस्य प्रमाणता।

सर्वं हि वाक्यजातं प्रयोजनपर्यवसाय्येव प्रमाणं भवति ; लोके प्रयोजनशून्यानां प्रमाणतया क्वचिदप्यनुपलब्धेः ।

ननु प्रत्यक्षादीनि हि हेयोपादेयापेक्ष(योपेक्ष?)णीयस्य(यस्व?)विषयावबोधनं कुर्वन्ति प्रमाणानि दृश्यन्ते। शब्दस्य को विशेषः, येन प्रयोजनवदर्थावबोधकत्वमाश्रीयेत। उच्यते— परप्रत्यायनार्थं हि वाक्यं प्रयुज्यते। परश्च न निष्प्रयोजनानि वाक्यानि श्रावयितुं शक्यः। तस्मात्प्रयोजनशून्यानामुदय एव दुर्लभः। अतः शास्त्रं प्रयोजनपर्यवसाय्येव। प्रमाणप्रयोजनञ्च द्विविधम्। सुखं दुःखनिवृत्तिश्चेति। तद् द्विविधं प्रयोजनं प्रवृत्तिनिवृत्तिभ्यामेव लभ्यते; यथा कामिनीपरिष्वङ्गेन कामावाप्तिः, अपथ्यसेवानिवृत्तेरग्निमान्द्यनिवृत्तिः; यथा(तथा?)ज्योतिष्टोमेन स्वर्गावाप्तिः, अपगोरणनिवृत्त्या शतयातनानिवृत्तिः। अतः प्रवृत्तिनिवृत्तिसाध्यं प्रयोजनम्।

न च वाच्यं 'स्ववेश्मनि निधिरस्ति' 'नायं सर्पः' इत्यादिवस्तुस्वरूपोपदेशपरवाक्यश्रवणसमनन्तरं निधिसद्भावसर्पनिवृत्तिभ्यां हर्षभयनिवृत्तिदर्शनात्तेषामपि वाक्यानां प्रयोजनपर्यवसानमस्तीति। तत्राप्यज्ञातस्य निधिसद्भावादेः पुरुषार्थहेतुत्वाभावाज्ज्ञानविधिपरत्वस्यैवाश्रयणीयत्वात्। तस्मात्प्रवृत्तिनिवृत्तिभ्यामेव पुरुषार्थ इति प्रवृत्तिनिवृत्त्यन्वयविरहिणां वेदान्तवाक्यानां प्रामाण्यं दुर्लभमिति, न वेदान्तप्रमाणं ब्रह्मेति।

अत्र ब्रूमः—

निध्याद्यवगतेश्चापि सिद्धयत्येव प्रयोजनम्।
तस्माद्वेदान्तवाक्यानां प्रामाण्यमनपोदितम्॥

यत्तावदुक्तं प्रयोजनपर्यवसाय्येव शब्दः प्रामाणमिति, (तत् ?) तथैव। यत्पुनरुक्तं प्रवृत्तिनिवृत्तिभ्यामेव प्रयोजनावाप्तिरिति, नैतन्नियतम्; निधिसद्भावादिप्रतिपादनपराणामपि वाक्यानां पुरुषार्थावाप्तिहेतुत्वदर्शनात्।

तत्र यदुक्त अज्ञातस्य निधिसद्भावादेः पुरुषार्थहेतुत्वाभावेन ज्ञानविधिपरत्वमेवाश्रयणीयमिति, तदयुक्तम्; ज्ञानस्यापुरुषतन्त्रत्वेन विधेयत्वासम्भवात्। न च ज्ञानार्थव्यापारस्य विधेयत्वेन तेषां ज्ञानविधिपरत्वं युक्तं वक्तुम्; तत्तद्वाक्यजन्येन निधिसद्भावादिज्ञानेन हर्षभयनिवृत्त्योर्दर्शनात्। बालातुराद्युपच्छन्दनवाक्यवदसत्येऽप्यर्थे निधिसद्भावादिज्ञानमात्रेण हर्षादीनां सम्भवान्नार्थपरत्वं सिद्धयतीति च न शङ्कनीयम्; उपच्छन्दनवाक्येऽप्यर्थसद्भावभ्रान्त्या

पुरुषार्थावाप्तिः। अत एव ह्यर्थस्याभावे निश्चिते सति तदानीमेव हर्षादयो निवर्तन्ते। अतो निध्यादिसद्भावप्रतिपादनपराणां वाक्यानां पुरुषार्थहेतुत्वं सम्भवत्येव।

किञ्च 'विश्वजिता यजेत' 'न कळञ्जं भक्षयेत्' इत्यादीनां प्रवृत्तिनिवृत्तिपराणां वाक्यानां क्रियाफलसम्बन्धाश्रवणात्प्रथमं प्रयोजनान्वयो न ज्ञायते। यदा विज्ञायते, तथा-(दा?) पि प्रयोजनं मन्दतरञ्च। वेदान्तवाक्योक्तं तु निरतिशयानन्दं ब्रह्म श्रवणवेळायामेव प्रतिपन्नमिति तेषां वाक्यानामेव साक्षात्प्रयोजनपर्यवसानमिति वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यमुपपन्नम्।

इति नीतिमालायां वेदान्तप्रामाण्यनिर्णयाधिकारो द्वितीयः॥

---

श्रीः

# नीतिमालायां
## तृतीयाधिकार आरभ्यते.

इदानीं ब्रह्मस्वरूपं निरूप्यते ॥ अत्र केचिदाहुः—

जगज्जन्मस्थितिध्वंसकारणं ब्रह्मशब्दितम् ।
तच्च सच्चित्सुखाद्वैतस्वरूपं श्रुतिषूदितम् ॥

"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्वि-जिज्ञासस्व तद्ब्रह्म' इति इति श्रुत्या जगत्कारणं ब्रह्मेति प्रतिपादितम्। तच्च 'सत्यं ज्ञानमनन्तं ब्रह्म', 'विज्ञानमानन्दं ब्रह्म' 'आनन्दो ब्रह्म' इति श्रुतिभिः सच्चिदद्वितीयानन्दस्वरूपं प्रतिपादितम्। एवं निर्विशेषस्वयम्प्रकाशसुखस्वरूपस्य सन्मात्रस्य ब्रह्मण एव अनाद्यज्ञानतिरोहि-तस्वरूपतया सुख्यहं, दुःख्यहं, देहोऽयं, मनुष्योऽयं, घटोऽयं, पटोऽयम्, इत्याद्यान्तरबाह्यवि-विधाध्यासोपादानतया जगत्कारणत्वमुपपद्यत इति। ते प्रतिक्षिप्यन्ते।

सत्तादेर्दुर्निरूपत्वात्तिरोधेरप्यसम्भवात् ।
कारणत्वस्य वा सिद्धेः पक्षोऽयं नोपपद्यते ॥

सच्चित्सुखाद्वितीयस्वरूपं ब्रह्मेति वदद्भिः सदादिशब्दानां ब्रह्मणि प्रवृत्तौ निमित्तानि वक्तव्यानि। न तानि वक्तुं शक्यन्ते; सत्तादीनां दुर्निरूपत्वात्। तथाहि—न तावत्सत्ता जातिः सद्व्यक्तिभेदाभावात्। न च प्रमायाः सम्बन्धयोग्यत्वं सत्त्वम्; ब्रह्मणः प्रमेयत्वानङ्गीकारात्। अथासद्व्यावृत्तिः सत्त्वमिति चेत्, तदपि न। सदसद्विलक्षणस्य प्रपञ्च-स्याप्यसद्व्यावृत्तत्वेन सत्त्वप्रसङ्गात्। अथ सत्तैव सच्छब्दस्यार्थो वर्ण्यते, तदप्यसाधु; लोके सत्ताया धर्मत्वेन प्रसिद्धत्वात् ब्रह्मणः कञ्चन धर्मिणं प्रति धर्मत्वप्रसङ्गात्। तस्मात्सुदुर्नि-रूपम्।

एवं चैतन्यगुणयोगिनि वस्तुनि चिच्छब्दस्य प्रसिद्धेः ब्रह्मणश्चैतन्यगुणानङ्गीकारात्तस्य चित्त्वमपि न निरूपणमर्हति। यदि तु चैतन्यमेव चिच्छब्दवाच्यं स्यात्, तदा प्रमाणज्ञानानामपि ब्रह्मत्वं भवेत्। अथ प्रमाणज्ञानं न चैतन्यम्, अपि त्वन्तःकरणवृत्तिरूपत्वाज्जडरूपमिति चेत्, तर्ह्यन्तःकरणवत्तस्मादपि विषयोपलब्धिर्न स्यात्। अथ जडव्यावृत्तत्वं चित्त्वम्, तच्च स्वाधीनस्वप्रकाशत्वमिति मतम्; तच्च नैवम्; स्वव्यतिरिक्तप्रकाशानभ्युपगमेन स्वाधीनप्रकाशत्वाभावात्। तस्माच्चित्स्वरूपत्वं ब्रह्मणो दुर्विवेचम्।

एवं सुखरूपत्वमपि ब्रह्मणो न निरूपयितुं शक्यम्। सुखं मे स्यात्, सुखी भूयासमिति ह्यात्मगुणत्वेन तदनुभूयते। तथा पदार्थविदोऽपि बुद्धिसुखदुःखेच्छादीनामात्मगुणत्वमाचक्षते। तस्मात्तस्य गुणत्वप्रसिद्धेर्न सुखरूपं ब्रह्म भवितुमर्हति।

अथ अनुकूलत्वं सुखरूपत्वमिति मतम्, तदा (था?) पि वक्तव्यं, ब्रह्म कस्यानुकूलं भवतीति। न तावज्जीवानाम्; ब्रह्मव्यतिरिक्तानां तेषामनभ्युपगमात्। स्वस्यैवेति चेत्, तत्रापि वक्तव्यम्, किमिदमानुकूल्यन्नाम? भोग्यत्वमिति चेत्, तदपि न सिद्ध्येत्; स्वस्य भोक्तृत्वाभावेन भोग्यत्वानुपपत्तेः। दुःखनिवृत्तिरूपत्वमिति च न वाच्यम्; ब्रह्मणो निवृत्तिरूपत्वेनाभावात्मकत्वप्रसङ्गात्। निरपेक्षत्वं सुखरूपत्वमिति चायुक्तम्; काष्ठलोष्टादीनामपि निरपेक्षत्वेन सुखरूपत्वप्रसङ्गात्। तस्मात्सुखरूपत्वमपि ब्रह्मणो दुरुपपादम्।

यदिदमद्वितीयत्वं ब्रह्मण उक्तं, तदपि चिन्त्यम्। किं सदृशद्वितीयरहितत्वं तद्युक्तम्; ब्रह्मद्वित्वासम्भवात्। स्वकार्येण प्रपञ्चेन सद्वितीयं न भवतीत्यद्वितीयं ब्रह्मेति चेत्, तदपि न विरुद्धम्; कार्यकारणयोरेकत्वात्।

अथ 'सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्' इति प्रतिसर्गावस्थायां सन्मात्रस्य ब्रह्मणः सजातीयविजातीयस्वगतभेदरहिततयाभिधानात् 'नेह नानास्ति किञ्चन' 'अथात आदेशो नेति नेति' ब्रह्मणि नानात्वनिषेधात् 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति घटादिकार्यस्यासत्यताप्रतिपादनमुखेन ब्रह्मकार्यस्य प्रपञ्चस्य मिथ्यात्वप्रतिपादनात् 'सर्वं खल्विदं ब्रह्म' इति बाधितार्थसामानाधिकरण्यात्, 'तरति शोकमात्मवित्' इति प्रमात्रादिलक्षणस्य संसारस्य ज्ञाननिवर्त्यत्वोपदेशेन मिथ्यात्वावगमाच्च निर्धूतनिखिलविशेषमद्वि-

तीयं ब्रह्मेत्यभिधीयते। न च भेदावलम्बिभिः शास्त्रैः प्रत्यक्षादिभिश्चासां श्रुतीनां विरोधः शङ्कनीयः; भेदवासनादोषमूलत्वेन तासां दौर्बल्यात्। प्रत्युताद्वैतश्रुतीनां द्वैतनिषेधपरत्वेन परत्वात्ताभिर्भेदावलम्बिनां शास्त्राणामेव बाध्यत्वं भवति।

अनुमानादप्यद्वितीयत्वं प्रपञ्चमिथ्यात्वञ्च साधयितुं शक्यम्। तथाहि—विगीतो भेदव्यवहारोऽद्वैतवस्त्ववलम्बनः, भेदव्यवहारत्वात्, चन्द्रभेदव्यवहारवत्; विप्रतिपन्नः प्रपञ्चो मिथ्या, दृश्यत्वाच्छुक्तिरूप्यतादात्म्यवत् इति। तस्मान्निरस्तविशेषमद्वितीयं ब्रह्मेति।

तदसाम्प्रतम्; प्रकृतिप्रत्ययात्मकपदसङ्घातरूपवाक्यस्यानेकपदार्थसंसर्गावबोधकत्वेन कस्यचिदपि वाक्यस्य निर्विशेषवस्तुप्रतिपादनासामञ्जस्यात्। शास्त्रं तावन्नाद्वैतवस्तुनि प्रमाणम्। 'सदेव सौम्येदमग्र आसीत्' 'एकमेवाद्वितीयम्' इति वाक्यमपि सविशेषमेव वस्तु प्रतिपादयति। तथाहि—अग्र इति कालविशेषः प्रतीयते। आसीदिति क्रियाविशेषः। इदं सदिति जगतः सदात्मकत्वम्। एकमेवेति नामरूपविभागाभाववचनेन सच्छब्दवाच्यस्य ब्रह्मण उपादानत्वम्। अद्वितीयमित्यधिष्ठात्रन्तरनिराकरणेन निमित्तत्वम्। अत एवानन्तशक्तियोगश्च। अतो नानेन निर्विशेषवस्तुसिद्धिः।

'नेह नानास्ति किञ्चन' इति वाक्यमपि तत्त्वोपदेशपरमुपासनोपदेशपरं वा। उभयथापि सर्वभेदनिषेधो नानेन शक्यते वक्तुम्। प्रमात्राद्यभावेनोपदेशानुपपत्तेः। अत इदं वाक्यमब्रह्मात्मकनानावस्तुनिषेधपरम्। उपबृंहितञ्चैतद्भगवता

'न तदस्ति विना यत्स्यान्मया भूतञ्चराचरम्[१]' इति।

'अथात आदेशो नेति' इति वाक्यमपि ब्रह्मणः पूर्वं प्रस्तुतमाहात्म्येयत्तानिषेधपरम्; उत्तरत्रापि तन्माहात्म्यकथनाय (नात्।?) निरणैषीच्च भगवान्**बादरायणः** 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः[२]' इत्यत्र। अत इदमपि वाक्यं न निर्विशेषपरम्।

१. गी. X. ३९.

२. ब्र. सू. ३. २. २१.

'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति वाक्यमपि न कार्यघटादेर्मिथ्यात्वं ब्रूते, किन्तु तस्य कारणभूतमृद्द्रव्यादनन्यत्वं वक्ति। अतस्तेनापि प्रपञ्चस्य ब्रह्मकार्यतया ब्रह्मात्मकत्वमवगतमिति न ब्रह्मणो निर्विशेषत्वमवगम्यते। नापि प्रपञ्चस्य मिथ्यात्वम्। अन्येषामप्येवंजातीयानामियमेव गतिः।

यदुक्तं भेदावलम्बिनां शास्त्रप्रत्यक्षाणां भेदवासनादोषमूलत्वेन दौर्बल्यात्तेषां तैर्बाध्यत्वमिति, तदयुक्तम्; भेदवासनाया दोषत्वे प्रमाणाभावात्। भेदज्ञानस्य भ्रमत्वेन तज्जन्यवासनाया दोषत्वं निश्चीयत इति चेन्न; अन्योन्याश्रयणात्। भेदज्ञानस्य भ्रमत्वे निर्णीते तद्वासनाया दोषत्वनिर्णयः, तद्वासनाया दोषत्वे निर्णीते भेदज्ञानस्य भ्रमत्वनिर्णय इति॥

अथ वेदान्तवाक्यानां निरस्तसमस्तभेदवस्तुपरत्वनिश्चयेन भेदज्ञानस्य भ्रमरूपत्वनिर्णय इति नान्योन्याश्रयणमिति मतम्, तदा चक्रकाश्रयापत्तिः। भेदावलम्बिनां भेदवासनामूलत्वेन दौर्बल्ये निर्णीते वेदान्तवाक्यानां निरस्तसमस्तभेदवस्तुपरत्वनिश्चयः; तेषां निरस्तसमस्तभेदवस्तुपरत्वनिश्चये भेदज्ञानस्य भ्रमत्वनिश्चयः; भेदज्ञानस्य भ्रमत्वनिर्णये तद्वासनाया दोषमूलत्वेन भेदावलम्बिनां प्रमाणानां दौर्बल्यमिति।

यत्पुनरुक्तमद्वैतवस्तुपराणां शास्त्राणां द्वैतनिषेधपरत्वेन बलीयस्त्वमिति, तदप्यसङ्गतम्; निषेधात्मकस्य परस्यैवाप्रामाण्यदर्शनात्। चन्द्रैकत्वे ज्ञाते सत्येवावष्टम्भादिना अनेकचन्द्र इति मनीषा समुन्मिषति। न च सा प्रमाणम्। तस्माद्भेदावलम्बिनां प्रमाणानां न दौर्बल्यम्॥

यदुक्तं 'सर्वं खल्विदं ब्रह्म' इति बाधितार्थसामानाधिकरण्याद्विलक्षणस्य प्रपञ्चस्य मिथ्यात्वं सिद्ध्यति इति, तदपि न सिद्ध्येत्; तज्जलानीति तज्जत्वतल्लत्वतदनत्वैः प्रपञ्चस्य ब्रह्मात्मकत्वोपदेशपरत्वात्; नेदं रजतमितिवद्बाधस्याप्रतिसन्धानाच्च।

यत्तु प्रपञ्चस्य ब्रह्मज्ञाननिवर्त्यत्वोपदेशान्यथानुपपत्त्या मिथ्यात्वमवगम्यत इति, तदपि मनोरथमात्रम्; वाक्यजन्यज्ञानस्य संसारनिवर्तकत्वाभावात्। उपासनोपदेशपरत्वात्तेषां वाक्यानाम्। तस्माच्छ्रुतिभिर्वा श्रुत्यन्यथानुपपत्त्या वा न निर्विशेषवस्तुसिद्धिः।

यच्चेदमद्वितीयत्वे प्रपञ्चमिथ्यात्वे चानुमानद्वयमुपन्यस्तम्; तत्सर्वप्रमाणबाधितत्वात्कालात्ययापदिष्टम्। किञ्चैवमप्यनुमानं शक्यम्—असद्ब्रह्म, अदृश्यत्वाच्छशविषाणवत्; विप्रतिपन्नः प्रपञ्चस्सत्यः, अबाधितत्वादात्मवदिति।

किञ्च ‘ सर्वज्ञस्सर्ववित् ’ ‘ सत्यं ज्ञानमनन्तं ब्रह्म ’ इत्यादिभिर्वस्तुस्वरूपोपदेश-परैश्शास्त्रैः ज्ञानादिगुणविशिष्टतया ब्रह्मणोऽवगतस्य निर्विशेषत्वमनुपपन्नम् । न चैते गुणाः काल्पनिकास्सत्यवचनाः ; प्रमाणान्तरात् (राद [?])प्राप्तानां तेषामुपदेशानुपपत्तेः ।

अथ स्यात् ‘ सत्यं ज्ञानमनन्तं ब्रह्म ’ इति न विशिष्टं ब्रह्म प्रतिपादयति ; अख-ण्डैकरसब्रह्मस्वरूपप्रतिपादनपरत्वात्तस्य । तात्पर्ये हि शब्दः प्रमाणं भवति । समानाधि-करणपदसमूहात्मकस्य वाक्यस्यार्थैकत्वे तात्पर्यमिति सर्वसम्मतम् । न च विशिष्टवस्त्वैक्यस्य प्रतिपादनं सामानाधिकरण्यस्य युक्तम् ; विशेषणसम्बन्धे प्रमाणाभावात् । इदमेव विशेषण-सम्बन्धं विशिष्टैक्यञ्च प्रतिपादयतीति न युक्तम् ; वाक्यभेदप्रसङ्गेनोभयविधानस्या-शक्यत्वात् । विशिष्टैक्यप्रतिपादने विशेषणानां व्यावर्तकत्वस्वाभाव्याद्विशेषणभेदेन विशेष्य-भेदप्रसङ्गः । नीलमुत्पलमित्यादिषु नीलिमादिसम्बन्धस्य प्रत्यक्षसिद्धत्वाद्विशिष्टैक्यप्रति-पादनमविरुद्धम् । सत्यादिपदानां स्वार्थप्रहाणेन वस्तुस्वरूपोपस्थापनपरत्वे लक्षणादोषो भवतीत्युत्प्रेक्षा चायुक्ता ; प्रामाण्यानुगुणत्वाल्लक्षणायाः । न च पदानां पर्यायता ; सत्य-त्वादिविरोध्यसत्यत्वादिव्यावृत्तिरूपब्रह्मस्वरूपोपस्थापनेन तेषामर्थवत्त्वात् । अत एव तेषां प्रवृत्तिनिमित्तभेदोऽप्युपपन्नः ; न च व्यावृत्तीनां धर्मत्वेन ब्रह्मणः सविशेषणत्वप्रसङ्गः ; सकलेतरव्यावृत्तिरूपत्वाद्ब्रह्मणः ; यथा गुणजातिक्रियादिविशेषाणां स्वेतरविशेषव्यावृत्तिः स्वरूपमेव भवति । तस्मादेतद्वाक्यं निर्विशेषं वस्तु प्रतिपादयतीति न सगुणब्रह्मप्रतिपादन-परत्वमस्य वाक्यस्येति ॥

तदेतदसाम्प्रतम् ; विशिष्टवस्त्वैक्यपरत्वादेव समानाधिकरणपदसङ्घातरूपवाक्यस्य प्रामाण्योपपत्तेः । न च वाक्यस्योभयविधानम् , येन वाक्यभेदो भवेत् । व्युत्पत्तिवशेन पदा-नामेव विशिष्टार्थाभिधायित्वात् । न हि नीलमित्युक्ते नीलिमगुण एव प्रतीयते, किन्तु तद्विशिष्टं द्रव्यम् । सत्यमुभयोरपि प्रतीतिरस्ति । गुण एव शब्दात्प्रतीयते । अर्थस्य [द्रव्य-स्य [?]] प्रतीतिस्तु तत्सामर्थ्यसिद्धेति न युक्तं वक्तुम् ; नियमहेत्वभावात् । तस्मात्पदैरेव विशिष्टार्थाभिधानाद्विशिष्टैक्यमेव सामानाधिकरण्यावसेयम् ।

न च विशेषणभेदेन विशेष्यभेदप्रसङ्गः ; विरुद्धविशेषणानामेव विशेष्यभेदकत्वात् । अत एव खण्डो मुण्डः पूर्णश‍ृङ्गो गौरित्यत्र व्यक्तिभेदप्रतीतिः । नीलं सुगन्धि महदुत्पल-

मित्यत्र विशिष्टैक्यप्रतिपत्तिश्च । अखण्डवस्तुस्वरूपे तु (स्वरूपपरत्वे तु ?) वाक्यस्य, पदानां स्वार्थपरित्यागेन लक्षणादोषोऽवर्जनीयः । प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यानुपपत्तिश्च । पदानां पर्यायता च । अभिधेयविरोधिव्यावृत्तिपरत्वेऽप्यभावरूपैर्धर्मैः ब्रह्मणः सविशेषत्वं प्रसज्येत ।

तत्र यदुक्तं जात्यादिविशेषाणामे[मि ?]व व्यावृत्तीनां ब्रह्मस्वरूपत्वान्न ब्रह्मणस्सविशेषत्वमिति ; तदपि न शोभनम् ; जात्यादीनां धर्मस्वरूपत्वात् धर्माणां धर्मान्तरासम्बन्धाच्च तेषामितरव्यावृत्तिस्वरूपत्वं युक्तम् ; न द्रव्याणाम् । न हि घटस्य पटाद्यावृत्तिः स्वरूपम्[1] । घटत्वजातिर्हि तस्य पटाद्यावृत्तिः । ब्रह्मणो द्रव्यत्वादसत्यादिव्यावृत्तयो धर्मा भवेयुरिति तैस्सविशेषमेव ब्रह्म भवेत् । तस्मात् 'सत्यं ज्ञानमनन्तं ब्रह्म' इति वाक्यं सत्यत्वादिगुणविशिष्टं ब्रह्म प्रतिपादयतीति निर्विशषत्वं विरुद्धमेव ॥

किञ्च प्रत्यक्षविरुद्धमिदमद्वितीयत्वम् ; घटपटादिभेदानां प्रत्यक्षसिद्धत्वात् । अथ मतं न प्रत्यक्षं भेदग्रहणसमर्थम् । तथा हि—इतरेतराभावो वार्थान्तरं वा भेदः । उभयथापि तत्स्मरणस्य धर्मिप्रतियोगिस्मरणसव्यपेक्षत्वात् प्रत्यक्षज्ञानस्य क्षणिकत्वेन विळम्बासहत्वाच्च अनेन न भेदो ग्रहीतुं शक्यते । 'इदं तत्र सम्भवति' इत्येवं रूपो हीतरेतराभावः । तत्र प्रत्यक्षमिदमिति किं विदधाति ? एतन्न भवतीति व्यवच्छिनत्ति वा ? विदधदिदं प्रत्यक्षं तत्रैव क्षीणशक्तिकत्वान्न व्यवच्छेदसमर्थम् । नापि व्यवच्छिनत्ति ; विधिपूर्वकत्वाद्व्यवच्छेदस्य ॥

नापि युगपदेव विधिव्यवच्छेदौ करोति; क्षणिकत्वादेव तस्य क्रमभाव्युभयहेतुत्वासम्भवात् । अर्थान्तरत्वेऽपि भेदस्येतरेतराभावग्रहणपूर्वकत्वात्तद्ग्रहणस्योक्तदोषस्समानः । तस्मान्न प्रत्यक्षं भेदग्रहणसमर्थम् । प्रत्युत देशकालानवच्छिन्नस्य सन्मात्रस्य ग्राहकम् । तथा हि—चाक्षुषज्ञानसमनन्तरं सन्घटस्सन्पट इत्यादयो व्यवहाराः प्रतीयमाना दृश्यन्ते । तत्र सर्वत्र सदर्था घटादयश्च व्यवह्रियन्ते । तत्र क्रमभाविनोरुभयोरपि व्यवहारयोर्न प्रत्यक्षमूलत्वं सम्भवति ; तयोर्भिन्नकालज्ञानफलत्वात् । प्रत्यक्षज्ञानस्य क्षणिकत्वाच्च । तस्मात्तयोरेकः प्रत्यक्षमूल., इतरो भ्रान्तिमूल इत्यवश्याश्रयणीयः । इदं रजतमित्यनुवर्तमानस्येदमर्थ-

---

1. त्तिरूपत्वम् —पा .

स्यावभासोऽक्षमूलः । व्यावर्तमानरजतादेरवभासो भ्रान्तिमूल इत्यवगतम् । एवमत्राप्यनुवर्तमानं सदेव प्रत्यक्षेण गृह्यते । व्यावर्तमाना घटादयो भ्रान्त्या अवभासन्त इति निश्चीयते । न च रजतादीनामिव बाधो न दृश्यत इति तत्तदवभासानां कथं भ्रान्तित्वमिति शङ्का युक्ता ; बाधफलभूतानां व्यावृत्तीनामितरेतरबुद्धयोर्दृष्टत्वाद्बाधस्यापि विद्यमानत्वात् । अयं घट इति हि बुद्धौ पटव्यावृत्तिर्भवति । तथा अयं पट इति बुद्धौ घटव्यावृत्तिः । तस्मात्सन्मात्रग्राहि प्रत्यक्षमिति न प्रत्यक्षविरुद्धमद्वैतमिति ॥

नैतदुपपद्यते ; भेदस्य प्रत्यक्षसिद्धत्वादबाधितत्वाच्च । तत्र यदुक्तं भेदग्रहणस्य धर्मिप्रतियोगिग्रहणस्मरणसापेक्षत्वात्प्रत्यक्षज्ञानस्य क्षणिकत्वेन विधिव्यवच्छेदव्यवहारहेतुत्वासम्भवान्न भेदः प्रत्यक्षेण गृह्यत इति ; तद्भेदस्वरूपापरिज्ञानविजृम्भितम् । न ह्यस्माकमितरेतर-(रा ?)भावः तद्ग्रहणपूर्वकं इतरेतराभावो वा [कं अर्थान्तरं वा ?] भेदः । किन्तु वस्तुनः प्रकारभूता जात्यादयः । ते प्रकारत्वादेव प्रकारिणा सह प्रथन्ते । प्रकारि वस्त्वपि तैर्विना न प्रथते ; अनुपलब्धेरनुपपत्तेश्च । गौरयं शुक्लोऽयं गच्छत्ययमिति हि सर्वे प्रतियन्ति । नन्विदमर्थमात्रविषया कस्यचिदपि कदाचिदपि प्रतीतिरस्ति । नापि संस्थानेन विना गवाद्यर्थः प्रतीतिगोचरतामासादयति । किञ्च प्रथमत एव सकलेतरव्यावृत्ततयावभासनादेव हि प्रतियोगिस्मरणनिरपेक्षं पुरोवर्तिवस्तुनि तदर्थी प्रवर्तते । तस्मात्प्रत्यक्षं भेदग्रहणसमर्थमेव ।

ननु अयमस्माद्भिन्न इति धर्मिप्रतियोगिग्रहणस्मरणसव्यपेक्षं भेदग्रहणं दृश्यते । तत्कथं प्रथममेव भेदो गृह्यत इति । उच्यते—नेदं भेदग्रहणम् ; तस्य प्रतियोग्यपेक्षाभावात् । किन्तु अयमस्मादभिन्न इत्यभेदव्यवहारवत् कश्चिद्भेदव्यवहारः । किमुक्तं भवति ? यथा अयमिति स्वरूपाभेदव्यवहारादृते रूपतः परिणामतः संस्थानतश्च सौसादृश्याभिप्रायेणायमस्मादभिन्न इत्यभेदव्यवहारः प्रवर्तते ; तथायं गौरित्यादि भेदव्यवहारादन्यो द्वयोर्वस्तुनोः परिणामादिनिमित्तवैसादृश्यनिबन्धनोऽयमस्माद्भिन्न इति भेदव्यवहारो भवतीत्युक्तंभवति । तस्माद[द् ?]भेदग्रहणं धर्मिप्रतियोगिग्रहणस्मरणानपेक्षमिति न किञ्चिदेतत् ।

यत्पुनरुक्तं सन्मात्रविषयं प्रत्यक्षमिति ; तदपि स्ववीयः ; तस्य प्रमेयत्वानङ्गीकारात्, चक्षुरिन्द्रियस्य रूपरूपितदेकार्थसमवायिषु क्लृप्तशक्तिकत्वाच्च । यदुक्तं सन्घट इति सद्द्रव्यं प्रतीयत इति ; तत्र यद्वक्तव्यं, तच्छक्तिविक्षेपप्रतिक्षेपाधिकारे वक्ष्यते ।

यत्तु व्यावर्तमानत्वाद्घटादीनां रजतादेरिव काल्पनिकत्वमुक्तम्, तदप्ययुक्तम्; अप्रयोजकत्वाद्धेतोः। बाधितत्वादेव हि रजतादेः काल्पनिकत्वम्; न व्यावर्तमानत्वात्। न च व्यावृत्तिमात्रं बाधफलम्, अपि तु यद्देशकालयोर्यद्वस्तु भासते तद्देशकालव्यावृत्तता बाधफलभूता दृष्टा; तस्माद्भेदस्य प्रत्यक्षसिद्धत्वादबाधितत्वादद्वैतं प्रत्यक्षविरुद्धमेव ॥

यदुक्तं अद्वितीयं ब्रह्म अनाद्यज्ञानतिरोहितस्वरूपं विविधाध्यासोपादानमिति; तत्र अज्ञानं नाम किमिति वक्तव्यम्? न तावज्ज्ञानाभावः; तस्य वस्तुस्वरूपतिरोधायकत्वासम्भवादध्यासहेतुत्वासम्भवाच्च। न अन्यथा ज्ञानमज्ञानम्; तत एव।

अथ स्यात् ज्ञानप्रागभावातिरिक्तं सदसदनिर्वचनीयं तमोमायादिशब्दवाच्यं वस्तुयाथात्म्यज्ञाननिवर्त्यं भावरूपं किञ्चिद्वस्त्वज्ञानम्। तच्च श्रुतितदर्थापत्त्यनुमानप्रत्यक्षैरवसीयते। तथाहि—'नासदासीन्नोसदासीत्तदानीम्' इत्युपक्रम्य 'तम आसीत्तमसा गूढमग्रे' इत्युक्तलक्षणमज्ञानमभिधीयते। श्वेताश्वतराणामुपनिषदि 'मायां तु प्रकृतिं विद्यात्' इति मायाशब्देनाज्ञानमभिधीयते।

'तत्त्वमसि' इति सामानाधिकरण्यावगतजीवैक्यान्यथानुपपत्त्या तदवगम्यते। विरुद्धयोर्जीवब्रह्मणोरैक्यमज्ञानरूपदोषमूलमन्यतरमिथ्यात्वमन्तरेण नोपपद्यते।

प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदित्यनुमानेनाज्ञानं सिद्ध्यति।

तथा 'अहमज्ञो मामन्यञ्च न जानामि' इति प्रत्यक्षेणाज्ञानं प्रतीयते। न चेदं ज्ञानप्रागभावविषयम्; तस्याभावप्रमाणगोचरत्वात्। अस्य ज्ञानस्याहं सुखीतिवदपरोक्षाकारत्वाच्च। अस्त्वभावः प्रत्यक्षः, तथापीदं न ज्ञानाभावविषयम्; ज्ञानाभावानुभववेलायामहमर्थस्याश्रयतयाभावस्य विषयतया ज्ञानस्य प्रतियोगितया चानुभवस्यावश्यम्भावात्। अनुभवेन सह तदभावस्यावस्थानासम्भवाच्च। अथ आश्रयप्रतियोगिनोरनुभवो नाभ्युपगम्येत, तदा तत्सम्बन्धिज्ञानाभावस्वा[स्या ?]नुभवो न सम्भवतीति सुतरां न ज्ञानाभावविषयं प्रत्यक्षम्। अज्ञानस्य भावरूपत्वे तु न धर्मिप्रतियोग्यनुभवापेक्षा तदनुभवस्य। न हि तमःप्रतिपत्तौ वस्त्वन्तरानुभवोऽपेक्षितः। अथ भावरूपमप्यज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन

विरुद्धमित्यस्य प्रत्यक्षस्य तद्विषयत्वमप्ययुक्तमिति चेत्, तन्न; वस्तुनः स्वयंप्रकाशत्वेन साक्षिचैतन्याविषयत्वात्। अतो न निष्प्रमाणकमज्ञानमिति ॥

अत्रोच्यते। यदुक्तं 'तम आसीत्तमसा गूढमग्रे' इति श्रुतिसिद्धमज्ञानमिति, तदसत्; तमश्शब्दस्यान्धकारे चोद्भूततमोगुणे प्रकृतितत्त्वे च लोकशास्त्रयोः प्रसिद्धत्वात्; अज्ञाने प्रसिद्ध्यभावाच्च। आच्छादकत्वगुणयोगात्तमश्शब्दोऽज्ञाने वर्तत इत्युत्प्रेक्षामात्रम्; आच्छादकत्वासम्भवस्य वक्ष्यमाणत्वात् ॥

'मायां तु प्रकृतिं विद्यात्' इत्यत्रापि नाज्ञानसम्भव उच्यते; अपि तु प्रकृतेर्विचित्रार्थसर्गकरत्वं प्रतिपाद्यते। विचित्रसर्गकरवस्तु मायाशब्दवाच्यम्। तच्च द्विविधम्—किञ्चिद्विचित्रं भ्रान्तिज्ञानकरम्, यथा ऐन्द्रजालिकानां मणिमन्त्रौषधादि, किञ्चिद्विचित्रार्थसर्गकरम्, यथा असुरराक्षसास्त्रादि। तस्मात्प्रकृतिरपि महदादिविचित्रार्थसर्गकरत्वान्मायेत्युच्यते।

यच्चोक्तं तत्त्वमसीत्यैक्योपदेशान्यथानुपपत्त्या अज्ञानं कल्प्यत इति; तदपि जगत्कारणत्वविशिष्टस्य जीवप्रकारविशिष्टस्य च ब्रह्मण ऐक्योपदेशपरत्वेनान्यथैवोपपन्नत्वादयुक्तम्। किञ्च सर्वज्ञे ब्रह्मणि विरुद्धाज्ञानपरिकल्पनहेतुभूता न काचिदनुपपत्तिर्दृश्यते, येनाज्ञानं कल्प्येत ॥

यच्च भावरूपाज्ञानसाधनतया अनुमानमुपन्यस्तम्; तदपि न शोभनम्; तेनैवानुमानेनानैकान्तिकत्वाद्धेतोः। न हि तस्यानुमानप्रमेयस्याज्ञानस्यावारकं भावरूपमज्ञानान्तरमस्ति; अनवस्थाप्रसङ्गात्। ब्रह्मणस्तिरोधानासम्भवेन जगत्प्रतिभासानुपपत्तेश्च। प्रदीपप्रभायाः प्रकाशकत्वाभावात्साधनविकलश्च दृष्टान्तः। ज्ञानं हि प्रकाशकम्; तदुत्पत्तिहेतुभूतानामिन्द्रियाणां विरोधिसन्तमसनिरसनमात्रेणोपकारकत्वमेव हि प्रदीपप्रभायाः। तस्मादनुमानमपि नाज्ञानसाधनम्।

यच्चोक्तं [1]अहमज्ञ इति प्रत्यक्षेणाभावरूपमज्ञानं प्रतीयत इति, तच्च नैवम्; अज्ञानानुभवस्याश्रयविषयभूतप्रत्यगर्थानुभवपुरस्सरत्वात्। मम मद्विषयमज्ञानमस्तीति

---

१. यदपि चोक्तम्—पा.

ह्यज्ञानमनुभूयते । तच्च तत्स्वरूपज्ञाननिवर्त्यमज्ञानं तस्मिन् प्रतिपन्ने कथमिव सम्भवति? अथ विशदस्वरूपावभासोऽज्ञानविरोधी । अविशदस्वरूपेणास्मदर्थस्य प्रतिपन्नतया अज्ञानानुभवो न विरोत्स्यत इति मतम् , तत्ज्ञानप्रागभावेऽपि समानम् । यच्च भावस्वरूपस्यानुभवे तमःप्रतिपत्ताविवान्यापेक्षा नास्तीति, तदापातरमणीयम् ; दृष्टान्तस्य विषमत्वात् । तमसः स्वरूपेणोपलम्भसम्भवात् । अज्ञानस्य तथाभावाभावात् । अज्ञानस्य तदन्यतद्विरोधितदभावानामन्यतमत्वात्सर्वथापि ज्ञानोपलब्धिपूर्वकस्तदुपलम्भः । तमसश्चालोकविरोधीत्यनेनाकारेण प्रतिपत्तौ आलोकप्रतिपत्त्यपेक्षत्वमस्त्येव । तस्मान्न केनापि प्रमाणेन भावरूपाज्ञानसिद्धिः ॥

किञ्च आश्रयोऽस्याज्ञानस्य निरूपणीयः । न तावज्जीवाश्रयत्वं तस्य सम्भवति ; अज्ञानकल्पितत्वाज्जीवानाम् । नापि ब्रह्माश्रयत्वम् ; तस्य ज्ञानसमानाश्रयत्वात् ; ब्रह्मणो ज्ञानाश्रयत्वानभ्युपगमात् । ज्ञानाश्रयत्वविरहिणां घटादीनां हि नाज्ञानाश्रयत्वं दृष्टम् ।

अपि चाज्ञानेन ब्रह्मणस्तिरोधानञ्च अशक्यप्रतिपादनम् । आच्छाद्यविषयज्ञानोत्पत्तिनिरोधो ह्याच्छादनशब्दार्थः । अत्र त्वाच्छाद्यस्य ब्रह्मणो ज्ञानविषयत्वानङ्गीकारात्तदुत्पत्तिनिरोधरूपमाच्छादनन्न सम्भवति । एवमपि प्रकाशस्वरूपस्य ब्रह्मणोऽज्ञानेन तिरोधानं वक्तव्यं चेत् , स्वरूपनाश एव तिरोधानशब्देनोक्तस्स्यात् ॥

किञ्चेदमज्ञानमननुभूतं सद्ब्रह्म तिरस्करोति, किं वा तिरस्कृत्य (स्कृत्य ब्रह्म?) अनुभवविषयं भवति । न प्रथमः कल्पः , अज्ञानतत्तिरोधानकल्पनयोर्वैयर्थ्यप्रसङ्गात् । प्रपञ्चप्रतिभासार्थमज्ञानतिरोधाने कल्प्येते । अतिरोहितस्य ब्रह्मणोऽज्ञानसाक्षित्ववदज्ञानतिरोधानाभ्यां विनाप्यज्ञानकार्याभिमतप्रपञ्चदर्शनसम्भवात् । नापि द्वितीयः ; काचादिवत्स्वसत्तया तिरस्कृतिकरस्याज्ञानस्य ज्ञानबाध्यत्वाभावप्रसङ्गात् । को दोष इति चेत् , अज्ञानकार्यस्य प्रपञ्चस्य सत्यत्वमेव दोषः ॥

किञ्चेदमज्ञानं केन निवर्त्यते? ब्रह्मयाथात्म्यानुभवेनेति चेत् , ब्रह्मयाथात्म्यानुभवः किं ज्ञानस्वरूपं ब्रह्मैव? उत तद्विषयं ज्ञानान्तरं वा? ब्रह्मस्वरूपमेवेति चेन्न ; स्वरूपनिवृत्त्या ज्ञानस्य [अज्ञानस्य?] स्वस्मिन्नसम्भवात् । अथ ज्ञानान्तरमिति चेत्तदपि न ; निर्वि-

शेषस्य ब्रह्मणः स्वयम्प्रकाशत्वेन ज्ञानविषयत्वासम्भवात् । अनभ्युपगमाच्च ।

अथ ब्रह्मणोऽद्वितीयत्वज्ञानमज्ञानस्य निवर्तकमिति मतम्, तदपि विकल्पनीयम् । अद्वितीयत्वं किं ब्रह्मणः स्वरूपम्? उत धर्मः? प्रथमे कल्पे पूर्वोक्तदोषानतिवृत्तिः । उत्तरस्मिन् कल्पे ब्रह्मणस्सद्वितीयत्वप्रसङ्गः ॥

स्यान्मतं, प्रपञ्चमिथ्यात्वज्ञानं तन्निवर्तकमिति ; तदप्यसङ्गतम् ; ब्रह्मविषयेणाज्ञानेन तस्य विरोधाभावात् । प्रपञ्चमिथ्यात्वज्ञानस्य तत्सत्यत्वाज्ञानेन विरोधः, न ब्रह्मविषयेणाज्ञानेन ।

यदि मन्वीत प्रपञ्चमिथ्यात्वज्ञानमेव ब्रह्मयाथात्म्यज्ञानम्, तस्मात्तेन तदज्ञानस्य विरोधो युक्त इति प्रपञ्चमिथ्यात्वज्ञानेन ब्रह्माज्ञानं निवर्तत इति, तदपि हास्यम् ; प्रपञ्चमिथ्यात्वस्य ब्रह्मस्वरूपत्वासम्भवात् । तस्माद्ब्रह्मतिरोधायकं तदाश्रयं तज्ज्ञाननिवर्त्यं भावरूपमज्ञानं न सिद्ध्यति ।

यच्चोक्तं ज्ञानस्वरूपं ब्रह्म अविद्याशबलं सज्जगदुपादानकारणमिति, तद्विवेचनीयम् । तत्र किं ब्रह्मोपादानं जगदुत अविद्योपादानमथोभयोपादानम्? न तावत्प्रथमः कल्पः ; कारणानुरूपत्वात्कार्यस्य जगतो ज्ञानस्वरूपत्वे सत्यत्वप्रसङ्गात् । नापि द्वितीयः ; ब्रह्मोपादानत्वश्रुतिव्याकोपप्रसङ्गात् । नापि तृतीयः ; जगतो जडाजडात्मकत्वसत्यत्वासत्यत्वादिविरुद्धस्वभावत्वप्रसङ्गात् ।

अथ स्यात् ज्ञानस्वरूपे ब्रह्मण्यविद्यादोषवशाज्जगदध्यस्तम् । अध्यासाधिष्ठानत्वमेव ब्रह्मण उपादानत्वम् । उपपन्नञ्चैतत् । दृश्यते हि शुक्तिकाशकले रजतमित्यपरोक्षावभासः । नायं सम्यग्रजतविषयः ; असन्निहितत्वात्तस्य । न च निर्विषयः ; विषयशून्यज्ञानस्य कचिदप्यनुपपत्तेः। नापि स्वविषयम्(यः?); परत्वा[त्वेना?]वभासात् । न चासद्विषयः; रजतावभासात् । न चेदं स्मरणम् ; अनुभवरूपत्वात् । न च शुक्तिकाविषयः ; अतद्रूपत्वात्प्रतिपत्तेः । भासमानं हि विषयो भवति । तस्मादपूर्वं रजतं दोषवशाच्छुक्तिकायामुत्पन्नमवभासते । नेदमसत् ; भासमानत्वात् । न च सत् ; बाधितत्वात् । अतस्सदसद्विलक्षणं तदभ्युपगमनीयम् । एवं सदसदनिर्वचनीयं जगदविद्ययोत्पन्नमवभासते । निरधिष्ठानभ्रमानुपपत्तेस्तस्य ब्रह्माधिष्ठानमवगम्यते । अधिष्ठानत्वमेव तस्योपादानत्वमिति ॥

नैतद्युक्तम् ; ब्रह्मणो भ्रमाधिष्ठानत्वानुपपत्तेः । शुक्तिकादावधिष्ठाने केनचिद्-भास्वरत्वाकारेण प्रतिपन्ने शुक्तित्वाद्याकारेण तिरोहिते सति हि रजतादिभ्रमो दृष्टः । ब्रह्म तु निर्विशेषतया निराकारं स्वयम्प्रकाशञ्च । अतोऽधिष्ठानभूतस्य प्रतिपन्नत्वादप्रति-पन्नाकारांशासम्भवाच्च न तस्मिन् जगदध्यासः सम्भवति । अध्यासहेतुभूताया अविद्याया असम्भवश्च पूर्वमेवोक्तः ।

यदुक्तं शुक्तिकायां दोषवशात्सदसद्विलक्षणं रजतमुत्पन्नमवभासत इति ; तदपि साहसम् ; सदसद्विलक्षणस्यानुपपत्तेः । एकस्य हि वस्तुनः सद्वैलक्षण्यमसद्वैलक्षण्यञ्च विरुद्धत्वान्न सम्भवति ।

निष्प्रमाणकं चैतत् सदसदनिर्वचनीयत्वम् । यत् ख्यातिबाधान्यथानुपपत्तिः प्रमा-णमित्युक्तम् ; तदपि न ; ख्यातिबाधयोरन्यस्यान्यथाभानादेवोपपत्तेः । दृश्यते हि सम्य-ग्रजतवदिदं रजतमिति पुरोवर्तिनो रजतात्मकत्वम् ।

ननु कथं रजतेऽवभासमाने तज्ज्ञानस्य शुक्तिका विषयो भवति ? न भासमानत्वं विषयत्वम् । किन्तर्हि ? तत्संप्रयुक्तचक्षुरिन्द्रिय(यज ?) ज्ञानव्यावर्त्यत्वम् । कथं तर्हि इन्द्रिय-सम्बन्धरहितस्य रजतस्य भानं सम्भवति । भवत्पक्षे वा कथमिन्द्रियसम्बन्धरहितस्यानिर्वच-नीयरजतस्यावभासः ? दोषवशादिति चेत् , समानमेतदस्माकमपि । अत एव हि तस्य भ्रम-त्वम् । तस्मादेवान्यथाभानान्नेदं रजतमिति प्रसक्तताद्रूप्याकारबाधोऽप्युपपन्नः ।

किञ्च रजतार्थिनः पुरोवर्तिनि प्रवृत्तेरन्यथाख्यातिरेवाङ्गीकरणीया । यदि शुक्तिकैव रजतात्मना नावभासते, किमिति रजतार्थी तत्र प्रवर्तते ? त्वयाप्यनिर्वचनीयरजतस्य सम्यग्रजततयावभासादेव प्रतीति (प्रवृत्ति ?) र्भवतीति वक्तव्यमित्यन्यथाख्यातिरङ्गीकरणीया ।

किञ्च शुक्तिकायामनिर्वचनीयं वस्तु किञ्चिज्जातमिति वदता तस्य रजतबुद्धिशब्द-योर्निबन्धनं वक्तव्यम् । यदि रजतत्वादिजातियोगः, सा किमनिर्वचनीया ? अनिर्व-चनीया चेत् , सम्यग्रजतेषु रजतत्वबुद्धिशब्दौ न स्याताम् । सत्या चेदनिर्वचनीयवस्तुनि न स्याताम् । तस्मात्सदसद्विलक्षणस्य वस्तुनोऽसम्भवान्निर्विशेषस्य ब्रह्मणो जगद्भ्रमाधिष्ठा-नत्वासम्भवाच्च ब्रह्म जगद्रूपेण विवर्तमानं जगदुपादानं भवतीति नैतदुपपत्तिमत् ॥

**इति नीतिमालायां विवर्तपक्षप्रतिक्षेपाधिकारस्तृतीयः ।**

श्रीः

## नीतिमालायां

## चतुर्थाधिकार आरभ्यते.



अपर आहुः—

> सम्भृ(संहृ ?)तौ ब्रह्म निर्भेदं सर्वशक्तिसमन्वितम् ।
> भोक्तृभोग्यादिरूपेण सर्गे परिणतं भवेत् ॥
>
> मृदादिपरिणामत्वं घटादेरिव दृश्यते ।
> तथा सत्येव वेदान्तवाक्यं सर्वं समञ्जसम् ॥

'सदेव सौम्येदमग्र आसीत्' 'एकमेवाद्वितीयं ब्रह्म' इत्यादिभिः प्रतिसर्गावस्थायां प्रलीननिखिलविकल्पं सन्मात्रं ब्रह्मावगतम्। तत्सर्वशक्तितया सर्गसमये विचित्रचिदचिन्मिश्रप्रपञ्चरूपेण परिणतमिति 'तदैक्षत बहु स्यां प्रजायेय' इत्यादिभिर्वाक्यैरवगतम्। तस्माद्ब्रह्मपरिणामतया ब्रह्ममयं जगत् ।

ननु जगतो ब्रह्मकार्यत्वाभ्युपगमे तेन तदन्येन भवितव्यम्। तथाहि—कार्यकारणयो रूपभेदो नामभेदोऽपि दृश्यते। तथा उदकाहरणकुड्यनिर्माणादिव्यवहारभेदश्च दृश्यते। तस्मात्कारणभूतादन्यत्कार्यं भवितुमर्हति। अपि च कारणादनन्यत्कार्यं चेत्, कारकव्यापारवैयर्थ्यञ्च स्यात्। एवं कारणात्कार्यस्यान्यत्त्वाज्जगतो ब्रह्मपरिणामत्वं नोपपद्यते ॥

उच्यते। कारणात्कार्यमनन्यत्; मृदयं घट इति प्रत्यभिज्ञानात, संस्थानविशेषभाजो मृद्द्रव्यादृते द्रव्यान्तरानुपलब्धेश्च। रूपभेदादयः संस्थानान्तरयोगादेवोपपद्यन्ते। पृथुबुध्नोदराद्याकारस्य कुलालादिव्यापारभावभावित्वात्कारकव्यापारस्यार्थवत्त्वम्। तस्मात्कारणादनन्य-

त्कार्यमिति ब्रह्मणोऽनन्यज्जगत्। एवं जगतो ब्रह्मपरिणामत्वाभ्युपगमे सत्येव 'सदेव सौम्येदमग्र आसीत्' 'एकमेवाद्वितीयं ब्रह्म' 'सर्वं खल्विदं ब्रह्म' 'आत्मैवेदं सर्वं' इत्यादीनामद्वैतपराणां 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'पतिं विश्वस्य' इत्यादिद्वैतपराणां च वेदान्तवाक्यानां सामञ्जस्यं भवति। 'यथा अग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवात्मनस्सर्वाणि भूतानि व्युच्चरन्ति। तेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति' 'अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देव एकीभवति'

'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम।
अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये सम्प्रलीयते ॥'

इत्यादीनि प्रकृतिपुरुषोत्पत्तिप्रळयवादीनि श्रौतानि स्मार्तानि वाक्यानि समञ्जसानि भवन्ति। तस्मान्निरस्तसमस्तविषयस्य ब्रह्मणः परिणामभूतं जगदिति।

अत्रोच्यते—

ब्रह्मणोऽपरिणामित्वश्रुतेश्चानुपपत्तितः।
जीवस्य नित्यतायाश्च कृतनाशादिदोषतः ॥

मोक्षसाधनवैयर्थ्यान्मुक्तेरत्यर्थहानितः।
ब्रह्मणः परिणामित्ववादोऽयं नोपपद्यते ॥

ब्रह्म जगद्रूपेण परिणमत इति वदन्तः किमीश्वरादि(द्वि?)भिन्नं ब्रह्म वदन्ति? उत तमेव? तत्र प्रथमः कल्पो न सम्भवतीत्युपरितनाधिकारे वक्ष्यते। द्वितीयः कल्पोऽप्यनुपपन्नः; 'अस्थूलमनण्वह्रस्वम्' इत्याद्यनेकश्रुतिभिस्तस्यापरिणामित्वावगमात्। अनुपपत्तेश्च; न हि चिद्रूप एवेश्वरोऽचिद्रूपेण परिणमत इति सम्भवति ॥

अथ ईश्वरे उपादानत्वं सर्वात्मकत्वं च सर्वोपनिषत्प्रसिद्धम्। अतस्तस्य जगदाकारेण परिणामोऽङ्गीकरणीयः। अपरिणामित्वश्रुतिरन्यथा नेया। उपादानत्वसर्वात्मकत्वश्रुतेरेव जगतश्चैतन्यशक्तियोगोऽस्तीत्यवगम्यते। तस्याचित्त्वव्यपदेशश्चैतन्यस्य नित्यतिरोहिततया

वेदितव्य इति मतम्; तदप्ययुक्तम्; सर्ववस्तुविरोधात्। अपरिणामित्वश्रुतेरनन्यथासिद्धत्वाच्च। यदुक्तं जगतश्चैतन्यशक्तिरस्तीति न विरोध इति, तन्न, चैतन्यस्य नित्यानुपलब्धेस्तच्छक्तेरसद्भावस्यैव[१] निर्णीतत्वात्। तस्योपादानत्वं सर्वात्मकत्वञ्चापरिणामित्वाविरुद्धमिति ब्रह्मस्वरूपाधिकारे वक्ष्यते।

अथ स्यात्—उपाधिशक्तियुक्तं ब्रह्म। अतो जगत्परिणाम उपपन्नः। उपादानत्वसर्वात्मकत्वोपदेशोऽप्युपपन्न इति। तत्र वक्तव्यम्—उपाधिशक्तिरिति कोऽर्थः? किं सूक्ष्मरूपमुपाधिद्रव्यम्? किं वोपादानरूपेण ब्रह्मणः परिणामसामर्थ्यम्? प्रथमे कल्पे द्रव्यद्वयाङ्गीकारात्सन्मात्रमद्वितीयं ब्रह्मेति विरुद्ध्यते। उत्तरस्मिन्पूर्वोक्तदोषानतिवृत्तिः। अथ मतं उपाधिद्रव्यं ब्रह्मणो भिन्नमभिन्नञ्च भवति। तस्मादनैकान्त्यादुभयपक्षोक्तदोषाः परिहृता भवन्तीति; तदनुपपन्नम्; भेदाभेदयोर्विरुद्धस्वभावत्वेनैकस्मिन्वस्तुन्यसम्भवात्।

अथोच्येत सर्वं वस्तु प्रतीत्यैव व्यवस्थाप्यम्। सर्वं च कारणात्मना जात्यात्मना चाभिन्नम्। कार्यात्मना व्यक्त्यात्मना च भिन्नं प्रतीयते; मृदयं घटः, खण्डो मुण्डो गौरिति। न चानयोर्विरोधः। सहानवस्थानभिन्नाधारत्वयोरभावात्। अभेदशब्दावयवस्य ............ ...(?)त्वाभिधायित्वाच्च। तस्मात्कस्यचिदपि वस्तुनः भिन्नत्वमभिन्नत्वञ्च नैकान्तिकमिति; तदप्ययुक्तम्; एकस्मिन्विलक्षणत्वतद्विपरीतयोरसम्भवात्। आकारभेदादविरोधं वदन् यदि कारणजात्याकारयोरभेदाश्रयत्वं कार्यव्यक्त्योर्भेदाश्रयत्वञ्च वदति, तदा नैकस्य द्व्यात्मकत्वसिद्धिः। अथ कार्यकारणयोर्जातिव्यक्त्योश्चैकत्वादेकस्य द्व्यात्मकता सिद्ध्येत्, तथा सत्याकारभेदादविरोधो न सिद्ध्येत्। जातिव्यक्त्योरेकत्वं चानुपपन्नम्; अनुवर्तमानव्यावर्तमानाकारतया तयोर्विरुद्धस्वभावत्वात्।

स्यादेतत्। अयं गौरिति तादात्म्यप्रतीतेस्तयोरैक्यं प्रतीयते। न चानुवृत्तिव्यावृत्तिप्रतीतिः। तत्कथमनयोर्विरुद्धस्वभावत्वम्? इति। तत्र वक्तव्यम्—किं तादात्म्यमिति? न तावत्सम्बन्धविशेषः। तस्य सम्बन्धिद्वयाधारत्वेनैकत्वासिद्धेः। नाप्यैक्यम्; अनुपलब्धेः। तथा

१. नित्यानुपलब्धेस्तदभावस्यैव—पा०.

सत्ययं गौरित्येकस्य द्विरवभासः स्यात्। न च तद्युक्तम्; न ह्ययमिति वा गौरिति वा अवभासः। किन्तु अयं गौरिति तयोर्विशेषणविशेष्यतया ह्यवभासः। किञ्च व्यक्त्यन्तरे जातिप्रत्यभिज्ञया जातेरनुवर्तमानत्वं व्यक्तेर्व्यावर्तमानत्वञ्च प्रतीयत इति तयोर्विरुद्धस्वभावत्वम्। तस्माज्जातिव्यक्त्योरेकत्वनिबन्धनमेकस्य द्व्यात्मकत्वं न सिद्ध्यति।

यदुच्यते आकारद्वययोगिवस्त्वाश्रयत्वाद्भेदाभेदयोरेकस्य द्व्यात्मकता सिद्ध्यतीति; तदपि न सिद्ध्येत्; भेदाभेदनिर्वाहकाकारद्वयातिरिक्ततदाश्रयवस्तुसद्भावे प्रमाणाभावात्।

यदुच्यते—खण्डस्य मुण्डाद्व्यावृत्तिरूपं खण्डत्वं मुण्डात्खण्डस्य भेदः, अनुवृत्तिरूपं गोत्वमभेद इत्येकस्य भिन्नाभिन्नत्वमविरुद्धमिति। तदप्यचारु; गोत्वस्यानुवृत्तिरूपत्वाभावात्। खण्डो गौर्मुण्डो गौरिति खण्डमुण्डयोरनुवर्तमानतया हि गोत्वमवभासते। न त्वनुवृत्तिरूपतया। गोत्वस्यानुवृत्तिरूपत्वे तद्वत्तया खण्डमुण्डव्यक्त्योरनुवृत्तत्वमभ्युपेतव्यम्। अनुवृत्तिर्हि कस्यचित्केषुचिद्भवति। न हि खण्डवृ(व्य ?)त्तिर्मुण्डव्यक्त्यनुवृत्ता भवति। मुण्डवृ(व्य ?) त्तिः खण्डव्यक्त्यनुवृत्ता वा। गोत्वं ह्युभयोरनुवर्तते। तथानुवृत्तिव्यावृत्त्योर्भिन्नाश्रयत्वान्नैकस्य द्व्यात्मकता।

अथ खण्डताद्यपरसामान्यं भेदः; गोत्वादिपरसामान्यमभेदः। उभयोरेकनिष्ठत्वेन भिन्नाभिन्नत्वं सम्भवतीति। तदप्यसाधु; भेदाभेदशब्दयोः पारिभाषिकत्वप्रसङ्गात्। अस्त्विति चेत्, नास्माकमपि काचित्क्षतिः। कस्यचित्कस्माच्चिद्वैलक्षण्यं भवति। तद्विपरीतं च न भवतीत्येतदेव भिन्नाभिन्नप्रतिपाद्यम्। तस्मादुपाधिब्रह्मणोर्भेदाभेदासम्भवादुक्तदोषोऽवसीयते।

यच्चोक्तं प्रकृतिपुरुषयोरागन्तुकत्वादुपसंहारभेदवेळायां तयोर्विनाश इति; तदप्यनुपपन्नम्। 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' 'गौरनाद्यन्तवती' 'अविनाशी वा अरे अयमात्मा' 'नित्यो नित्यानां चेतनश्चेतनानाम्' इत्यादिभिस्तयोरजत्वाविनाशित्वनित्यत्वश्रवणात्तयोरुत्पत्तिप्रळयवादीनि पूर्वोक्तानि वचनानि ब्रह्मणा विभागप्रतिपादनपराणि वेदित-

व्यानि। अत एव 'तम एकीभवति' इत्येकभावमात्रमुच्यते। न तु लयः। स्मर्यते च तयोर्ब्रह्मणो विभागः। 'विष्णोस्स्वकाशात्परतोदिते द्वे रूपे प्रधानं पुरुषश्च विप्र' इति। दिते खण्डिते इत्यर्थः।

किञ्च जीवानामनित्यत्वे कृतनाशाकृताभ्यागमदोषौ प्रसज्येयाताम्। पूर्वकल्पावसानेऽपि नष्टैर्जीवैः प्रागनुष्ठितानामभुक्तफलानां कर्मणां निष्फलत्वादुत्तरकल्पादावुत्पद्यमानानामसत्स्वपि कर्मसु तत्फलभूतदेहेन्द्रियादिपरिग्रहाच्च। अपि च तेषामनित्यत्वे मोक्षसाधनभूतोपासनविधयश्च निष्फलाः स्युः। आत्मनाशस्य निःश्रेयसत्वात्तत्साधनभूतोपासनविध्यानर्थक्यं न भवतीति न वाच्यम्; प्रतिसंहारवेळायामात्मनाशरूपनिःश्रेयससिद्धेरवर्जनीयत्वात्॥

अथ उपासनविधयस्त्वरमाणविषया इति चेत्, तन्न; त्वराया असम्भवात्। यद्युपासकाः स्वनाशो मोक्ष इत्यवसेयुः, तदा मोक्षकथामपि परिहरेयुः। तस्मादुपासनविध्यानर्थक्यं भवत्येव। आत्मविनाशस्य दुःखनिवृत्तिफलत्वेन पुरुषार्थत्वं सम्भवतीति च हास्यम्; स्वसत्ताया अनुपमर्देन दुःखनिवृत्तेरर्थ(र्थ्य?)त्वात्। न च सर्वे दुःखनिवृत्तिमर्थयन्ते। वर्तमानदुःखानामेव तन्निवृत्तेरपेक्षितत्वात्। सर्वे सुखमेव प्रार्थयन्ते किञ्च 'रसं ह्येवायं लब्ध्वा नन्दी भवति' इति मुक्तस्यानन्दप्राप्तिवर्णनात्, 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त' इत्यपुनरावृत्तिश्रुतेश्च मुक्तस्य सद्भावो मुक्तेः सुखस्वरूपत्वञ्च ज्ञायते। तस्मात्परिणामवादोऽपि न समञ्जसः॥

इति नीतिमालायां परिणामप्रतिक्षेपाधिकारश्चतुर्थः॥

---

श्रीः

## नीतिमालायां

## पञ्चमाधिकार आरभ्यते.



अन्ये पुनराहुः—

> सद्द्रव्यं स्वप्रभं ब्रह्म सर्वशक्तिसमन्वितम् ।
> भोक्तृभोग्यनियन्त्राख्यनित्यव्यूहसमन्वितम् ॥
>
> प्रळये सुप्तकल्पाः स्युर्नियन्ता(न्त्रा?)पापवर्गिणः ।
> सर्गे तत्त्रिविधं ब्रह्म नानाव्यूहव्यवस्थितम् ॥

सन् घटः सन् पट इति सर्वेषु पदार्थेषु सद्बुद्ध्यनुवृत्तेस्सदत् द्रव्यम्; घटादयस्तस्यावस्थाविशेषाः—'यथा मृदयं घटः शरावः' इति घटशरावादिषु मृद्बुद्ध्यनुवृत्तेस्तत्र मृदेव द्रव्यम्। घटशरावादयो मृदवस्थाविशेषाः। न चेदं सत्त्वं घटत्वादिजातिवद्धर्ममात्रम्; घटादीनामुपमर्देऽपि कपालादिषु सद्बुद्ध्यनुवृत्तेः। तस्मात्सर्वात्मकं सद्द्रव्यं ब्रह्म। स्वव्यवहारेऽपि स्वसत्तातिरेकेणान्यानपेक्षत्वात्स्वयम्प्रकाशश्च। अस्यैव विविधविचित्रचिदचिदात्मकत्वाद्विचित्रशक्तित्वं चावगम्यते।

भोक्तृभोग्यनियन्तारश्च व्यवस्थिताः ब्रह्मणोऽशविशेषाः। अत एव च नित्याः। तत्र भोक्तृत्वशक्तियुक्तो भोक्तृसमष्टिपुरुष एकः। तस्य व्यूहाः प्रतिशरीरमवस्थिता जीवाः। ते चाणवोऽनन्ता नित्याः; ब्रह्मांशत्वेन स्वप्रकाशाश्च। तेषु च ब्रह्मगुणाः केचिदाविर्भूताः; केचित्तिरोहिताः॥

ते जीवास्त्रिविधाः। बद्धा मुक्ता नित्यसिद्धाश्च। प्रकृतिवैकारिकदक्षिणात्मकत्रिविधबन्धयुक्ता बद्धाः। मुक्तास्तु त एव तैर्बन्धैर्विमुक्ता आविर्भूतापहतपाप्मत्वादिब्रह्मगुणा

ईश्वरेण समानाः। सिद्धास्तु योगसिद्धाः अणिमाद्यैश्वर्ययुक्ताः। नित्यसिद्धा ईश्वरोपकरणभूताः।

सततपरिणामि प्रकृतिद्रव्यं भोग्यम्, तस्मिन्ब्रह्मगुणाः प्रायेण तिरोहिताः। अत एवाचेतनमित्युच्यते। एषा प्रकृतिः कालः परमाकाशोऽव्यक्तमिति त्रिधा भवति। कालो नामानाद्यन्ताजस्रक्षणपरिणामी मुहूर्ताहोरात्रादिविभागयुक्तः सर्वेषां परिणामपरिस्पन्दहेतुर्भवति।

परमाकाशो नाम प्रकृतेराद्यावस्था; प्रळयकाले तमश्शब्दवाच्या, परेणात्मना विभागं गता, तस्मात् पृथग्व्यवहारायोग्या, तप्तलोहसमावर्जितजलवत्संसृज्यमाना तिष्ठति। तादृश्यवस्था शक्त्यवस्थोच्यते। पुरुषस्य च प्रळयकाले तादृगवस्थानम्। एतामवस्थामधिकृत्य 'सदेव सौम्येदमग्र आसीत्' 'एकमेवाद्वितीयम्' इत्यादिश्रुतयः। सा च तमोवस्थापन्ना प्रकृतिः परस्मादात्मनो विभागरूपं विकारं प्रतिपद्यते। स विभागः शक्तिविक्षेप इत्युच्यते। स च परमात्मनो विभक्तस्य शक्तिलक्षणस्याचिद्द्रव्यस्य नित्यमेकरूपात्परमात्मद्रव्याद्विसर्पणमिव मणेः प्रभायाः। तद्विक्षिप्तं द्रव्यं परमाकाशः। स मुक्तानामीश्वरस्य च स्थानं भवति। तत्स्थानं शब्दपरिणामशक्तियुक्तत्वाद्वाक् अक्षरं चेत्युच्यते।

सत्त्वरजस्तमांसि मिळितानि अव्यक्तम्। तत्सर्गकाले महदादित्रयोविंशतिविभागभाग्भवति।

नियन्ता नामेश्वरः। स निरतिशयज्ञानानन्दैश्वर्यगुणः ब्रह्मांशत्वात्सर्वशक्तिः स्वयम्प्रकाशश्च। स च मुक्तसनाथः प्रळयकाले संसारिजीववत्सुप्तकल्पोऽवतिष्ठते। एवं सर्वजगद्ब्रह्मद्रव्यत्वाद(व्याद?)भिन्नं भवति। अवस्थारूपेण भिन्नञ्च भवति। अत एव द्वैताद्वैतपराणि वेदान्तवाक्यानि सर्वाणि समञ्जसानि भवन्तीति।

अत्राभिधीयते—

घटाः सन्तीति सत्ताया घटधर्मत्वदर्शनात्।
अस्तीति द्रव्यभावस्य घटादेश्च जडत्वतः॥

भोगभूमेश्च नित्यत्वान्मुक्तानामीश्वरस्य च ।
भोगस्य सार्वकालत्वान्मतमेतदसङ्गतम् ॥

यत्तावदुक्तं मृदयं घटः मृदयं शरावः इति वत् सन् घटः सन् पट इति प्रतीतेः सतो द्रव्यत्वं घटादीनामवस्थात्वं चावगम्यत इति; तद्विपरीतम् ; घटः सन् पटस्सन् इति घटादिद्रव्यधर्मत्वेन सत्ताया उपलब्धेः। न च घटशरावादयो मृद्द्रव्यस्यावस्थाविशेषाः। अपि तर्हि घटत्वशरावत्वाद्यवस्थाविशिष्टमृद्द्रव्यांशाः ; घटादीनामुपमर्देऽपि कपालादिषु सन्ति कपालानि इति सद्बुद्ध्यनुवृत्तेः। सत्त्वस्य धर्मत्वमनुपपन्नमित्यसङ्गतम् ; तत्रापि कपालानि सन्तीति कपालद्रव्यधर्मतया सत्त्वस्यावगतेः ।

अस्तु सत्त्वं धर्मः तत्किमिति वक्तव्यम्। उच्यते—सच्छब्दोऽनेकार्थवचनः। क्वचिदसच्छब्दाभिधेयाविद्यमानत्वविरोधिविद्यमानत्ववचनः ; यथा घटो नास्ति पटो नास्ति घटोऽस्ति सन् घट इत्यत्र। अस्ति सच्छब्दौ पर्यायौ; भवनक्रियाकर्तृवाचित्वात्। क्वचित्पण्डितवचनः ; यथा 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति ।

'इह सन्तो न वा सन्ति सतो वा नानुवर्तसे'

'सर्वदाभिगतस्सद्भिः' इत्यादिषु। क्वचिच्छक्तिमद्वचनः ; यथा औषधविशेषेष्विदमौषधम् सदिति। तत्र निरुपाधिकास्तित्वयोगेन सच्छब्दो ब्रह्मवचनः। यथा 'सदेव सौम्येदमग्र आसीत्' इति। उपबृंहितञ्चैतत्

'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः ।'

इति। तस्मात्सतो द्रव्यत्वमनुपपन्नम् ।

यच्च सद्द्रव्यस्य स्वयम्प्रकाशत्वमुक्तम्, तदप्यनुपपन्नम् ; घटादीनामपि सद्द्रव्यत्वेन स्वयम्प्रकाशत्वप्रसङ्गात् । अस्ति च तेषामपि स्वसत्तयैव स्वव्यवहारहेतुत्वं नाम स्वयंप्रकाशत्वमिति चेन्न; अनुपलब्धेः। सामग्र्यभावात्तस्यानुपलब्धे(ब्धि?): नासद्भावादिति चेत्, तदपि न ; नित्यानुपलब्धेरसद्भावसाधकत्वात्। अथ तेषु नित्यानुपलब्धस्यापि तस्य सद्भाव उच्येत,

तदा भोग्यभोक्तृनियन्तृष्वन्योन्यस्मिन्नित्यानुपलब्धानां भोग्यत्वभोक्तृत्वनियन्तृत्वशक्तीनामन्योन्यस्मिन् सद्भावः प्रसज्येत। तथा सति तेषां भेदकाकाराभावाद्वैलक्षण्यं न स्यात्। तस्मात्सदेकदेशस्य घटादेर्जडत्वेन सतोपि स्वयम्प्रकाशत्वन्न सिद्ध्यति।

भोक्तृभोग्यनियन्त्रंशं ब्रह्मेति यदुक्तं तदप्यनुपपन्नम्; नियन्तृव्यतिरिक्ते ब्रह्मणि प्रमाणाभावात्। तथाहि—'यतो वा इमानि' इति वाक्यं यज्जगत्कारणं तद्ब्रह्मेत्यवगमयति। किं तज्जगत्कारणमित्यपेक्षायां 'सदेव सौम्येदमग्र आसीत्' 'एकमेव' इत्यादिवाक्यं सतः कारणत्वमवगमयति। सच्छब्दस्य चेतनाचेतनसाधारणवाचित्वेन विशेषाकाङ्क्षायां 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिवाक्यं चेतनस्य कारणत्वमवगमयति। आत्मशब्दस्यापि सर्वसाधारणत्वेन चेतनविशेषाकाङ्क्षायां 'एको ह वै नारायण' इत्यादिवाक्यं नारायणमेव जगत्कारणमवगमयति। तस्मान्नारायण एव जगत्कारणभूतं ब्रह्म।

किञ्च सृष्टिपरेषु तत्तद्ध्यानपरेषु वेदान्तवाक्येषु यद्वस्तु कारणत्वेन परत्वेन ध्येयत्वेन च यैश्शब्दैर्निर्दिश्यते, तैश्शब्दैः तद्वस्त्वनूद्य तस्य नारायणत्वं विदधता नारायणानुवाकेन नारायणस्य परब्रशब्दवाच्यत्वं स्वरूपप्रयुक्तम्, न ब्रह्मांशप्रयुक्तमित्यवगम्यते। अपि च 'विष्णोस्सकाशादुद्भूतं जग'दिति कारणत्वेन प्रस्तुतं परमात्मानं ब्रह्मशब्देनानूद्य तस्य लोकदृष्टप्रक्रियया कारणत्वानुपपत्तिश्च(त्तिः?) लोकेऽपि पदार्थानां विचित्रशक्तित्वप्रदर्शनेन तत्परिहारश्चाभिहितः।

निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः।
कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते॥

शक्तयस्सर्वभावानामचिन्त्यज्ञानगोचराः।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः॥

भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता॥ इति।

तदिदं परमात्मन एव ब्रह्मत्वे सङ्गच्छते। तस्मात् तदतिरिक्तं तदंशि ब्रह्म न संभवति।

यत्त्विदं श्वेताश्वतराणां च वचनं 'एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित्' 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति, न तद्ब्रह्मणः त्रिविधत्वं ब्रूते। अपि तु चिदचिद्विभूतिविशिष्टं परमात्मानमुपासीनस्य ब्रह्मभूयं ब्रूते। अस्यार्थः-प्रेरितारमिति विभक्तिव्यत्ययश्छान्दसः। ब्रह्ममेतदिति लिङ्गव्यत्ययश्च। तथैव 'काल स्वभावो नियतिः' इत्यारभ्य 'भोक्ता भोग्यं प्रेरितारं चे'ति यदेतत्त्रिविधं जगत्प्रोक्तं विभूति-विभूतिमद्रूपेणावस्थितं, एतत्त्रितयं यथा आत्मसंस्थं मनसि प्रतिष्ठितं भवति, तथा नित्य-महर्निशं ज्ञेयमुपासितव्यम्। इतः परमपवर्गार्थे वेदितव्यमुपासितव्यम् किञ्चिदपि नास्ति। एतत्सर्वमविकलं मत्वा साक्षात्कारपर्यन्तमुपास्य ब्रह्म भवति; ब्रह्मसमानाकारो भवतीति। 'पृथ-गमात्मानं प्रेरितारंच मत्वा जुष्टस्ततस्तेनामृतत्वमेति' 'प्रशासितारं सर्वेषामणीयांसमणीयसां' 'रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्' इत्यादिभिरैकार्थ्यादयमेवार्थः। तस्मात्परमात्मव्यति-रिक्तं ब्रह्म निष्प्रमाणकम्।

यदपीदमुक्तं—चिदचिदीश्वरा ब्रह्मणो नित्यांशाः। तत्राचिद्रूपतमोवस्था प्रळयकाले तप्त-लोहसमावर्जितजलवत्परमात्मनोऽविभक्ता सर्गकाले मणेरिव प्रभा विसर्पतीति; तत्र वक्त-व्यम्—अयमविभक्तः नित्योऽचिदंशः परमात्मनः किं विलक्षणोऽविलक्षणो वा किं वोभय-स्वभावः? अविलक्षणत्वे परमात्मनोऽचित्त्वं तत्प्रयुक्ताश्च दोषाः प्रसज्येरन्। विलक्षणत्वे तु तयोरेकद्रव्यत्वं न सम्भवति; विलक्षणानां नित्यानामेकद्रव्यत्वानुपलब्धेः। सुवर्णरचितपारश-दानामनित्यतया सत्वादिगुणवैषम्यहेतुकपरिणामविशेषायत्तवैलक्षण्यानामुपपन्नमेकद्रव्यत्वम्।

प्रयोगश्च—प्रकृतिपुरुषेश्वराणां नैकद्रव्यत्वम्, नित्यविलक्षणस्वभावत्त्वात्; येषामेक-द्रव्यत्वं भवति तेषां नित्यवैलक्षण्यं न भवति; यथा पूर्वनिर्दिष्टानाम्। उभयस्वभावत्वं तु पूर्वस्मिन्नधिकारे निरस्तम्। तस्मात्प्रकृतिपुरुषेश्वराणां नैकद्रव्यत्वम्।

ननु सन्तु प्रकृतिपुरुषेश्वरा न ब्रह्मद्रव्यांशाः; ईश्वरस्यैव ब्रह्मत्वात्। प्रकृतिपुरुषा-वीश्वरब्रह्मांशाविति किमिति नाभ्युपगम्यते। 'सदेव सोम्येदमग्र आसीत्' 'सर्वं खल्विदं ब्रह्म' 'वासुदेवः सर्वं' इत्यादिशास्त्रैः प्रकृतिपुरुषयोरीश्वरद्रव्यत्वं परिदृश्यते। उच्यते—'पतिं विश्वस्य' 'स कारणंकरणाधिपाधिपः' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' इत्याद्यनेक

श्रुतिभिस्तयोः तस्य च विरुद्धस्वभावत्वावगमात् न तयोरीश्वरद्रव्यांशत्वमुपपद्यते। भिन्नद्रव्यत्वेऽपि तयोस्तेन तादात्म्यं तयोस्तं प्रत्यंशत्वं चाविरुद्धमित्युपरितनाधिकारे वक्ष्यते।

यदुक्तं ईश्वरभोगभूमिः परमाकाशः प्रकृतेराद्यवस्थेति, तदपि प्रमाणविरुद्धम्; ऋचो अक्षरे परमे व्योमन्, 'दिव्यं स्थानमजरं चाप्रमेयं' 'कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः' इत्यादि श्रुतिस्मृतिभिस्तस्याप्राकृतत्वापरिणामित्वादिभिर्नित्यत्वावगमात्।

यत्पुनरुक्तं प्रतिसर्गवेळायामीश्वरस्य मुक्तानां च संसारिवत्स्वापो भवतीति, तदपि साहसम्। 'तद्विष्णोः परमं पदम्' 'सर्गेऽपि नोपजायन्ते प्रळये न व्यथन्ति च' इत्यादिश्रुतिस्मृतिभिस्तस्य तेषां च सर्वदा द्रष्टृत्वद्रष्टृत्वस्तोतृत्वनिद्राक्षयाद्यवगमन्न तेषां स्वापस्सम्भवति; हेत्वभावात्। न तावत्कर्माणि हेतुः, अकर्मवश्यत्वात्। नापि कालः; अकालतन्त्रत्वादीश्वरस्य। प्रत्युत काल एवेश्वरतन्त्रः।

'कालं स पचते तत्र न कालस्तत्र वै प्रभुः।
कालस्य हि च मृत्योश्च जङ्गमस्थावरस्य च॥
ईश्वरो भगवानेकस्सत्यमेतद्ब्रवीमि वः।'

इत्यादिशास्त्रात्॥

नापि ईश्वरसङ्कल्पो हेतुः; असम्भवात्। न हि परमकारुणिक ईश्वरः चिरकालमाध्यात्मिकादिदुःखदुःखितान् स्वानुबुभूषया स्वोपासनं कुर्वाणान् 'वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः' इत्यादिप्रक्रियया स्वेनापि चिरकालप्रार्थितान् संसारिणः कथमपि लब्ध्वा स्वात्मानं प्रापय्य द्विपरार्धकालं निद्रितान् करोति, स्वयमपि तावन्तं निद्रायत इति संभवति। तदेवमनेकदोषगर्भत्वादिदमपि मतं न मनोहरम्॥

इति नीतिमालायां शक्तिविक्षेपप्रतिक्षेपाधिकारः पञ्चमः॥

---

श्रीः

## नीतिमालायां

## षष्ठाधिकार आरभ्यते.



तत्त्वविद एवं वर्णयन्ति—

> अनुकूलापरिच्छिन्नतेजोद्रव्यं स्वयंप्रभम् ।
> ज्ञानशक्तिबलैश्वर्याद्यनन्तगुणभाजनम् ॥
>
> चिदचिद्वस्तुरूपत्वात्तत्तच्छब्दैरुदीरितम् ।
> जगज्जन्मस्थितिध्वंसकारणं ब्रह्मशब्दितम् ॥

सर्वानुकूलं देशकालवस्तुभिरपरिच्छिन्नं हेयप्रत्यनीकं स्वयंप्रकाशं तेजोद्रव्यं ब्रह्म; श्रुत्यादिभिस्तथावगमात्। 'एतदमृतमभयमेतद्ब्रह्म' 'रसो वै सः' इत्यादिभिर्भोग्यत्वावगमात् सर्वानुकूलमवगम्यते। 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्' 'यतो वाचो निवर्तन्ते' 'अप्राप्य मनसा सह'

> 'वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वदेवैः'

इत्यादिभिः श्रुतिस्मृतिभिर्देशकालाभ्यामपरिच्छिन्नत्वं गुणैरियत्ताराहित्याद्वस्तुतोऽपरिच्छिन्नत्वञ्चावगम्यते।

ननु वस्तुनो वस्तुतोऽपरिच्छेदो नाम वस्त्वन्तरासहत्वम्। तद्यदि वस्त्वन्तरं सहेत, तदा तच्च इदञ्चेति तेन परिगणितत्वात्तेन तस्य परिच्छिन्नत्वं स्यात्। किञ्च वस्त्वन्तरसद्भावे तद्व्याप्तस्य देशस्य ब्रह्मणा व्याप्तत्वासम्भवेन देशतोऽपरिच्छिन्नत्वञ्च सिद्ध्येत्। तस्माद्वस्त्वन्तरसद्भावोऽङ्गीकृतश्चेद्ब्रह्मणस्त्रिविधपरिच्छेदराहित्यं (न?)सम्भवतीति। उच्यते—न वस्त्वन्तरसद्भावो

वस्तुतः परिच्छेदः; येन तदसद्भावस्तदपरिच्छिन्नत्वं स्यात्। सत्यपि तस्मिन् वस्तुतोऽपरिच्छिन्नत्वव्यवहारदर्शनात्। सुवर्णशकलस्य रूपमानविशेषेण यावत्तन्निकषशिलातुलाभ्यां न परिच्छिद्येत तावन्तं कालं तस्यापरिच्छिन्नत्वव्यवहारो दृश्यते। अतो वस्तुनो वस्त्वन्तरेण सह परिगणितत्वमात्रेण तेन तस्य परिच्छिन्नत्वं न सम्भवति। तस्माद्वस्त्वन्तरसहत्वं न वस्तुपरिच्छेद इति न तद्विपरीतत्वं वस्तुनोऽपरिच्छिन्नत्वम्।

यदुक्तं वस्त्वन्तरसद्भावे ब्रह्मणो देशपरिच्छेदो न सम्भवतीति; तन्न ; वस्त्वन्तरदेशयोरपि व्यापकत्वाद्ब्रह्मणः। तस्मात्त्रिविधपरिच्छेदरहितं ब्रह्म। 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामः सत्यसङ्कल्पः' 'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' 'परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे।' 'शुद्धे महाविभूत्याख्ये' इत्यादिश्रुतिस्मृतिभिर्निर्मलत्वञ्च तस्यावगम्यते। नैर्मल्यं च त्रिविधम्—स्वतःशुद्धत्वं, हेयवस्तुना संसर्गेऽपि तद्दोषैरस्पृष्टत्वं, श्रवणस्मरणसङ्कीर्तनादिभिरपवित्राणां पवित्रताहेतुत्वं चेति। 'विज्ञानं ब्रह्म' इत्यादिश्रुतिभिस्तस्य स्वयम्प्रकाशत्वं चावगम्यते। 'यदिदमस्मिन्नन्तः पुरुषे ज्योतिः परं ज्योतिरुपसम्पद्य' 'तं देवा ज्योतिषां ज्योतिः' इत्यादि श्रुतिभिस्तस्य तेजस्स्वरूपत्वञ्चावगम्यते।

ननु किमिदं ब्रह्मणः स्वयम्प्रकाशत्वम्? यद(यद्य?)नन्याधीनप्रकाशत्वं, तदापि प्रकाशशब्दार्थो वक्तव्यः। यदि प्रभा ; प्रदीपादिषु अव्याप्तम् ; प्रभायाः प्रदीपाधीनत्वात्। न च प्राकट्यम् ; अनभ्युपगमात्। न च स्वयं संज्ञानम् ; एकस्य कर्तृत्वकर्मत्वविरोधात्स्वकर्तृकस्वविषयज्ञानानुपपत्तेः। तस्माद्वक्तव्यं स्वयम्प्रकाशत्वम्।

उच्यते—व्यवहारानुगुण्यं प्रकाशशब्दार्थः। ब्रह्म स्वसत्तया स्वस्मै स्वव्यवहारहेतुर्भवतीत्यर्थः। प्रत्यगात्मनोऽपि समानमेतत्स्वयम्प्रकाशत्वम्। ज्ञानस्य तु स्वयम्प्रकाशत्वं स्वाश्रयं प्रति स्वसत्तयैव स्वव्यवहारानुगुण्यम्।

एवंविधं ब्रह्म ज्ञानबलैश्वर्यवीर्यतेजःप्रभृत्यसंख्येयमङ्गळगुणसङ्गतञ्च। 'परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'तस्य नाम महद्यशः' 'तेजोबलैश्वर्यमहाविभूतिस्सुवीर्यशक्त्यादिगुणैकराशिः' इत्यादिश्रुतिस्मृतिभिः तथात्वावगमात्। न च तासां श्रुतीनां निर्गुण-

श्रुतिविरोधः ; सर्वदा नैर्गुण्यप्रतिपादनासम्भवस्योक्तत्वात् । एतेषां गुणानामुपदेशवैयर्थ्यप्रसङ्गाच्च। अपि च 'अपहतपाप्मा' इत्यादि श्रुतिर्गुणनिर्गुणवाक्ययोः विषयव्यवस्थापनं कुर्वन्ती तयोर्विरोधं शमयति।

एवं विधं ब्रह्म समस्तचिदचिद्वस्तुशरीरकम्। काण्वमाध्यन्दिनशाखयोरन्तर्यामिब्राह्मणे सुबालोपनिषदि च सर्ववस्तूनां परमात्मशरीरत्वश्रवणात्। 'जगत्सर्वं शरीरं ते' 'तानि सर्वाणि तद्वपुः' 'तत्सर्वं वै हरेस्तनुः' इत्यादिस्मरणाच्च। तत्र चित्स्वरूपमुपरितनाधिकारे वक्ष्यते।

अचिद्वस्तु त्रिविधम्—कालोऽव्यक्तं परमकाशश्चेति। कालोऽनाद्यन्ताजस्रक्षणपरिणामी मुहूर्ताहोरात्रादिविभागवान् परिणामपरिस्पन्दहेतुः।

अव्यक्तं त्रिगुणात्मकम्—तत् प्रळयकाले नामरूपविभागानर्हसूक्ष्मदशापन्नं परमात्मना अविभक्तं भवति। सर्गकाले परमात्मसङ्कल्पेन विभक्तं महदादिरूपेण परिणतं नानानामभाग्भवति।

परमाकाशो नाम शुद्धसत्त्वमयोऽस्पृष्टदोषगन्धः शाश्वतः परमपुरुषस्य मुक्तानां नित्य सूरिणां भोगभूमिर्भवति। एवंविधचिदचिद्वस्तुशरीरकं ब्रह्म।

ननु शरीरसम्बन्धस्य कर्मनिमित्तत्वात् 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम्' इत्यादिभिः श्रुतिभिः परमात्मनोऽशरीरत्वावगमादकर्मवश्यत्वोच्च न तावत्तस्य शरीरत्वमुपपद्यते। चेतनाचेतनयोस्तच्छरीरत्वमनुपपन्नञ्च। इन्द्रियाश्रयत्वं भोगायतनत्वं वा हि शरीरत्वम्। न तदुभयमपि तयोस्सम्भवति। अचेतनेषु केषाञ्चित् उभयस्वभावत्त्वेऽपि न तेषां परमात्मशरीरत्वम् ; जीवकर्मनिमित्तत्वेन तेषां तच्छरीरत्वात्। तत्कथं तच्छरीरित्वं ब्रह्मणः ?

उच्यते—श्रुतयस्तावत्सर्वस्य वस्तुनः परमात्मशरीरत्वमुद्घोषयन्ति। प्रमाणान्तराप्राप्तार्थविषयाणां तासां नान्यपरत्वम् ; प्रमाणाभावात्। न चाशरीरत्वश्रुतिविरोधः ; कर्मनिमित्तशरीरनिषेधपरत्वात्तासाम्।

यदुक्तं चेतनानामचेतनानाञ्च केषाञ्चिदिन्द्रियाश्रयत्वाद्यभावाच्छरीरत्वमनुपपन्नमिति; तदसत्; इन्द्रियाश्रयत्वभोगायतनत्वयोः स्थावरादिषु वेश्मादिषु चाव्याप्तत्वादतिव्याप्तत्वाच्च शरीरलक्षणत्वानुपपत्तेः। न चान्यदपि विविधविचित्रदेवतिर्यङ्मनुष्यस्थावरशरीरेष्वनुगतं शरीरशब्दप्रवृत्तिनिमित्तमेकरूपं किञ्चिदुपपद्यते। तस्मात् यस्य यदाधेयम्, यद्विधेयम्, यच्छेषभूतम्, तत्तस्य शरीरभूतमित्यभ्युपगन्तव्यम्। एवमभ्युपगमे परमात्मनस्सर्वाधारतया सर्वनियन्तृतया सर्वशेषितया च सर्वशरीरत्वमुपपन्नम्। अत एव 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा' इत्युच्यते।

ननु च परमात्मनस्सर्वशरीरत्वे तस्याकर्मवश्यत्वेऽपि संसारिवत्प्रकृतिपरिणामविशेषरूपदेहसम्बन्धादपुरुषार्थान्वयो भवत्येव। नैवम्; 'अनश्नन्नन्यः' इति तस्य कर्मफलोपभोगाभावश्रुतेः; सम्बन्धमात्रस्य भोगहेतुत्वाभावाच्च। न केवलं तस्यापुरुषार्थान्वयाभावः, भोक्तृभूतजीवभोगनिर्वर्तकतया निरतिशयदीप्तियोगश्च। तदुच्यते 'अभिचाकशीति' इति। एतच्च **भगवता भाष्यकारेण** स्पष्टमभिहितं वेदार्थसङ्ग्रहे; यथा शिष्यशास्त्रोरविशिष्टेऽपि सम्बन्धे शिष्य एव कशया पीड्यते, न शासितेति। तस्मादुपपन्नं हि ब्रह्मणश्चिदचिच्छरीरकत्वम्। एवं चिदचिद्वस्तुनोः शरीरत्वात्परमात्मवस्तुनश्शरीरित्वाच्च भिन्नान्येतानि त्रीणि वस्तूनि।

ननु कोऽयं भेदो नाम? ननु उक्तं जात्यादिर्भेद इति। अस्तु धर्मिणो धर्म्यन्तराज्जात्यादिर्भेदः। जात्यादीनां तु परस्परधर्मिणां च भेदः कीदृशः? तेषां न स्वरूपमेव भेदः धर्मान्तरादर्शनात्। न च धर्मान्तरं कल्प्यम्; रूपादिवत्परत्र व्यवहारहेतुभूतानामेतेषां स्वस्मिन्नपि तथाविधव्यवहारहेतुत्वसम्भवात्। रूपिणश्चाक्षुषत्वमापादयद्रूपं स्वस्य चाक्षुषत्वं स्वयमेवापादयति। तस्मान्न धर्मान्तरं कल्प्यम्।

ननु जातिमेव न विद्मः। न तावत्सास्नादिमद्व्यक्तिभ्यो विलक्षणमनेकव्यक्तिकृत्स्नपरिसमाप्तं नित्यं किञ्चिद्वस्तु जातिशब्दवाच्यतया अभ्युपगममर्हतीति; अनुपलम्भादनुपपत्तेश्च। अनुवृत्ताकारावभासिनी बुद्धिर्हि तदभ्युपगमे निबन्धनम्। न हि सूक्ष्ममपि निरीक्षमाणानां सास्नादिसंस्थानतद्वद्वस्तुषु प्रथमपिण्डग्रहणवेळायां तावदनुवृत्तत्वावभासः। नापि द्विती-

यादिपिण्डग्रहणेऽपि तथाविधस्य वस्तुनोऽवभासः; तत्रापि संस्थानस्य वस्तुन एवोपलम्भात्। आश्रयभूतेषु वस्तुषूत्पत्तिनाशभाक्ष्वपि नित्यनिरंशगमनागमनशक्तं प्रत्येकं कृत्स्नपरिसमाप्तं जातितत्त्वमस्तित्वशङ्कामपि नाधिरोहति। तस्मान्न संस्थानातिरिक्तजातितत्त्वं नाम किञ्चिदस्ति।

संस्थानमपि न जातिर्भवितुमर्हति; प्रतिपिण्डं भिन्नत्वेन तस्यैकबुद्धिशब्दयोर्निर्वाहकत्वायोगात्। अनेकत्रैकबुद्धिशब्दौ तु तत्तद्व्यक्तिमाहात्म्यकृतौ। दृश्यते हि भिन्नानामपि चक्षूरूपालोकमनसां ज्ञानाख्यैककार्यजननम्। तस्माज्जातेर्दुर्निरूपत्वात्तस्या भेदत्वोपपादनं दूरनिरस्तम्॥

अत्राभिधीयते—संस्थानमेव जातिः तत्प्रतिपिण्डं भिन्नत्वेऽपि(न्नमपि?) द्वितीयादिपिण्डेषु सौसादृश्यात्प्रतिसन्धीयमानं स्वाश्रयेषु वस्तुष्वेकबुद्धिशब्दनिबन्धनं भवति। तदेव प्रतिसन्धीयमानसंस्थानसौसादृश्यमनुवृत्तिरिति चोच्यते। अत एव **भगवता भाष्यकारेण** संस्थानस्यानुवृत्तिधर्मविशिष्टत्व द्वितीयादिपिण्डग्रहणावसेयमित्यभिहितम्। संस्थानातिरिक्तजातिवादिभिरप्येतत्संस्थानसौसादृश्यमनुवृत्तिपर्यायमङ्गीकर्तव्यम्; येन सा जातिर्गोसदृशान् गवयपिण्डान् परिहृत्य सर्वेष्वपि गोपिण्डेषु समवैति। तद्वरमनुपपत्तिशतैकवेषाया अनुवृत्तिधर्मविशिष्टाया निष्प्रमाणिकाया जातेस्तद्बुद्धिशब्दनिर्वाहकत्वाङ्गीकारादुभयवाद्यभ्युपगतसुसदृशसंस्थानस्यैकबुद्धिशब्दनिबन्धनत्वाश्रयणम्। गोसदृशेषु गवयेषु सौसादृश्याभावादतद्बुद्धिरप्युपपन्ना। तदेवं संस्थानस्यैव जातित्वाज्जात्यादिर्भेद इति सुष्ठूक्तम्। तस्मादत्यन्तभिन्नं चिदचिद्वस्तुशरीरकं ब्रह्म।

एवं चिदचिद्वस्तुशरीरकत्वात्परमात्मनस्तत्तद्वस्तुवाचिनः सर्वे शब्दाः तदात्मभूतपरमात्मपर्यन्ततत्तद्वस्तुवाचकाः। यथा देवो जानाति, मनुष्यो जानाति, ब्राह्मणो यजेत, इत्यादिषु देवादिशरीरवाचकाश्शब्दास्तत्तच्छरीरविशिष्टजीवात्मनो वाचकाः।

न चास्य देहात्मसामानाधिकरण्यस्य लाक्षणिकत्वं युक्तम्; देवादिशरीराणामपि जातिगुणयोरिव प्रकारतैकस्वभावत्वाद्विरोधाभावेन लक्षणासमाश्रयणस्यायुक्तत्वाच्च। यदि जातिगुणवच्छरीरस्य प्रकारतैकस्वभावत्वमिष्येत, तद्वदेव प्रकारप्रकारिणोः शरीरात्मनोरपि सहोपलम्भनियमो भवेत्। न च तथोपलम्भः। तस्मात्तयोस्समानाधिकरणप्रयोगो लाक्षणिक

इति न वाच्यम्; प्रमाणवैकल्यादेव तद्ग्रहणसिद्धेः। जातितद्वतोर्गुणगुणिनोश्च सहोपलम्भनियमस्तयोश्चाक्षुषत्वाद्भवति। आत्मनस्तु शरीरवदचाक्षुषत्वान्न सहोपलम्भनियमो भवति। न पुनः प्रकारैकस्वभावत्वाभावात्। यथा गन्धादिगुणः प्रकारैकस्वभावोऽपि तदाश्रयभूतपृथिव्यादिग्राहकप्रमाणेन न गृह्यते, तथा शरीरात्मनोरिव(रपि?)जातितद्वतारिव प्रकारप्रकारित्वे समानेऽपि सहोपलम्भाभावोऽपि नानुपपन्नः।

ननु च द्रव्याणां द्रव्यान्तरप्रकारत्वे दण्डी कुण्डली इति वन्मत्वर्थीयप्रत्ययेन भवितव्यमित्यपि न वाच्यम्; पृथक्स्थितिप्रतिपत्तियोग्यतया दण्डकुण्डलादीनां प्रकारैकस्वभावत्वाभावाच्छरीरस्य तद्विपरीतत्वाच्च। तस्मात्प्रकारैकस्वभावस्य द्रव्यस्य प्रकारत्वं सामानाधिकरण्यावसेयम्। एवं शरीरात्मनोरपि। चिदचिद्वस्तुनोः परमात्मशरीरत्वेन तत्प्रकारैकस्वभावत्वात्तद्वाचिनां शब्दानां परमात्मनि पर्यवसानात्तेषां शब्दानां परमात्मवाचिना शब्देन सामानाधिकरण्यं मुख्यमेव।

ननु सर्वशब्दानां लोके वस्त्वन्तरवाचितया व्युत्पन्नानां परमात्मवाचित्वे मुख्यार्थपरित्यागो लक्षणा च प्रसज्येत। नैवम्; तेषां वस्तूनामभिधेयत्वापरित्यागात्। वेदान्तव्युत्पत्त्या तेषामेव शब्दानां परमात्मन्यपि शक्त्यवधारणाच्च। 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति जीवात्मपरमात्मानुप्रवेशात्सर्वेषामचिद्वस्तूनां नामरूपभाक्त्वं ह्यवगतम्। स्मर्यते च—परमात्मनस्सर्वशब्दवाच्यत्वम्। 'वचसां वाच्यमुत्तमम्' 'वेदैश्च सर्वैरहमेव वेद्यः' इति। तच्च **भगवता बादरायणेन** 'चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तः तद्भावभावित्वात्' इत्यत्र निरणायि। तस्माच्च चिदचिदीश्वराणां भिन्नत्वेपि ईश्वरस्य चिदचिद्वस्तुशरीरतया 'सर्वं खल्विदं ब्रह्म' 'तत्त्वमसि' इति समानाधिकरण्यं तस्य सर्वात्मत्वं चोपपन्नम्।

एवं शरीरभूते चिदचिद्वस्तुनी कदाचिन्नामरूपविभागानर्हसूक्ष्मदशे भवतः। तदा तद्विशिष्टं ब्रह्म कारणं भवति। तच्च 'तदैक्षत बहु स्यां प्रजायेय' इति 'तदात्मानं स्वयमकुरुत' इत्यादिभिरीक्षणपूर्वकबहुत्वकरणश्रवणान्निमित्तमुपादानञ्च भवति।

अत्र केचित्प्रत्यवतिष्ठन्ते—न तावच्चिदचिन्मिश्रितं ब्रह्मोपादानं भवति; परिणामाश्रयस्यैवोपादानत्वात्, प्रत्यक्परमात्मनोरपरिणामित्वेनोपादानत्वासम्भवाच्च। नापि शरीरभूतस्याचिद्वस्तुन उपादानत्वं वक्तुं शक्यम्; ब्रह्मोपादानश्रुतिविरोधात्, निमित्तोपादानयोर्भेदप्रसङ्गाच्च। तस्माच्चिदचिदीश्वरभेदमङ्गीकृत्य ब्रह्मणो जगत्कारणत्वं वदद्भिरचिद्रूपाः परमाणव उपादानकारणं, ब्रह्म निमित्तकारणमिति वक्तव्यम्। उपपन्नञ्चैतत्; पटादिकार्यस्य स्वस्मादल्पपरिमाणैस्तन्त्वाद्यनेकद्रव्यैरारब्धत्वदर्शनात्, तन्त्वाद्युपादानानां कुविन्दादिनिमित्तानां भेददर्शनाच्च।

स्यान्मतं—एकसुवर्णपिण्डादल्पपरिमाणादङ्गुलीयाद्यनेककार्यारम्भदर्शनादल्पपरिमाणैरनेकद्रव्यैः स्थूलैककार्यारम्भोऽनेकान्त इति; तन्न; तत्रापि सुवर्णपिण्डावयवैरल्पपरिमाणैः स्थूलकार्यारम्भदर्शनात्।

अथ स्यात्—असंयुक्तानां परमाणूनां कार्यानारम्भकत्वान्निरवयवानां तेषां संयोगानुपपत्तेस्सावयवत्वमाश्रयणीयम्। तदा तेषामपि तत एव कार्यत्वात्कारणान्तरापेक्षत्वेनानवस्थाप्रसङ्गान्न परमाणूनां कारणत्वं सम्भवतीति; तदपि न; निरवयवयोरात्ममनसोरिव तेषां संयोगोपपत्तेः। न च निरवयवानां संयोगेऽपि संयुक्तप्रदेशातिरिक्तप्रदेशान्तराभावात्प्रथिमा नोपपद्यत इति वाच्यम्; अनन्यथासिद्धकार्यस्य प्रत्यक्षसिद्धत्वात्। तस्मात्परमाणवो जगदुपादानमीश्वरो निमित्तकारणं भवतीति।

तदयुक्तम्; परमाणुसद्भावे प्रमाणाभावात्। यदुक्तमल्पपरिमाणैस्तन्त्वाद्यनेकद्रव्यैः स्थूलद्रव्यारम्भदर्शनात्परमकारणभूताः परमाणवस्सिद्ध्यन्तीति; तन्न; अवस्थान्तरापन्नतन्त्वादिकारणद्रव्यातिरेकेण कार्यद्रव्यान्तरानुपलब्धेः। प्रत्युत तन्तवः पटः, मृदयं घटः, हिरण्यमिदं कुण्डलमिति प्रत्ययेन कार्यकारणयोरेकद्रव्यत्वमेव प्रतीयते।

यदुक्तं निरवयवानां परमाणूनां आत्ममनसोरिव संयोग उपपन्न इति; तदपि नास्ति; हेत्वभावात्संयोगानुपपत्तेः। कर्मजो हि संयोगः। कर्म चादृष्टकारितम्। तच्चादृष्टं परमाणुगतं क्षेत्रज्ञगतं वा? उभयथापि तत्कर्मद्वारेण संयोगहेतुर्न भवति; तस्याकादाचित्कत्वेन संयोगस्या-

प्यकादाचित्कत्वप्रसङ्गात्। विपाकापेक्षत्वेऽपि नानाविधादृष्टानामेकदैव विपाकश्च निष्प्रमाणकः। ईश्वरेच्छयापि नियमो न सम्भवति ; आनुमानिकेश्वरस्य निराकृतत्वात्। शास्त्रसिद्धस्येश्वरस्याङ्गीकारे जगदुत्पत्तिरपि यथाशास्त्रमङ्गीकरणीया स्यात्। निरवयवानां तेषां संयोगेऽपि संयुक्तप्रदेशातिरिक्तप्रदेशान्तराभावात्प्रथिमानुपपत्तिश्चापरिहार्या। तेषां सावयवत्वे तदवयवानाञ्च सावयवत्वादनन्तावयवत्वप्रसङ्गेन मेरुसर्षपयोर्वैषम्यासिद्धिः। न च कार्यस्यानन्यथासिद्धिः ; ब्रह्मोपादानत्वेनाप्युपपत्तेः॥

यत्तु लोके निमित्तोपादानयोः भेदनियमस्य दृष्टत्वाद्ब्रह्मण उभयकारणत्वन्न सम्भवतीति; तदपि ब्रह्मणः सर्वशक्तित्वाल्लौकिकपदार्थानां व्यवस्थितशक्तित्वाच्च समाधेयम्। तस्मान्न परमाणव उपादानकारणम्।

यदपि कैश्चिदुक्तं सततपरिणामिनी स्वतन्त्रा प्रकृतिः पुरुषसंयोगवशान्महदादिविसदृशपरिणामवती भवति। प्रतिसर्गावस्थायां सूक्ष्मसदृशपरिणामवती भवति। तस्मात्प्रकृतिरेव जगदुपादानमिति ; तदप्ययुक्तम् ; सर्गप्रतिसर्गव्यवस्थानुपपत्तेः। पुरुषसंयोगश्च न सर्गहेतुर्भवति ; निष्क्रियत्वेन तयोस्संयोगासम्भवात्। सन्निधिमात्रं संयोग इति च न वाच्यम् ; तयोर्नित्यत्वेन सन्निधेरपि त(स?)दातनत्वात्। न चादृष्टहेतुकः स्पर्श (सः?); नित्यनिर्विकाराणां पुरुषाणां कर्तृत्वानभ्युपगमेनादृष्टासम्भवात्। सम्भवेऽपि अनन्तैर्जीवैः नियतकालमनुष्ठितानां युगपदुपपद्यमानजगत्सदृशफलानां कर्मणां सद्भावे प्रमाणाभावात्। अतः स्वतन्त्रायाः प्रकृतेरुपादानत्वमपि न युक्तमिति। तस्माच्छ्रुत्यनुसारेण ब्रह्मैव सर्वशक्तियोगाज्जगदुपादानकारणं निमित्तकारणञ्चेत्यास्थेयम्।

तत्र यदुक्तं मिळितस्योपादानत्वे प्रत्यक्परमात्मनोरपि कार्यत्वेन परिणामित्वं प्रसज्येतेति; नैतदस्ति ; परिणामरहितस्यापि कार्यत्वसम्भवात्। यथा शरीरस्य पाञ्चभौतिकत्वेनापरिणामिनोऽप्याकाशस्य कार्यत्वमङ्गीक्रियते। अवस्थान्तरापत्तिरेव हि कार्यता। सा प्रत्यक्परमात्मनोरपि विद्यते। सर्गावस्थायां विकसितज्ञानत्त्वात्प्रत्यगात्मनः; परमात्मनः स्थूलचिदचिद्वस्तुनोरन्तरात्मतयावस्थानाच्च। अचिद्वस्तुवत्स्वरूपान्यथाभावस्तु न विद्यते। अत एव तयोः कार्यत्वेऽपि नानित्यत्वम्। न हि विकारभात्त्वमात्रमनित्यतां सम्पादयति; यथा

करणाधीनज्ञानस्य जीवस्य ज्ञानरूपविकारभाक्त्वेऽपि नित्यत्वं न निरुध्यते। तस्मात्तयोरप्युपादानत्वं कार्यत्वं नित्यत्वं चोपपन्नम् ॥

एवं त्रयाणामुपादानत्वेन कार्यत्वेऽपि शुक्लकृष्णरक्ततन्तूपादानवत्स्वभावासङ्करोऽप्युपपन्नः। ननु च त्रयाणामुपादानत्वे परमात्मन उपादानत्वश्रवणं जगतस्तदात्मकत्वश्रवणञ्च कथमुपपद्यते? उच्यते—चिदचिद्वस्तुनोर्द्रव्ययोरपि जातिगुणवत्परमात्मप्रकारतैकस्वभावत्वेन शक्तिमत्परमात्मपरतन्त्रत्वात्तद्वतः परमात्मन उपादानत्वव्यपदेशः तादात्म्यवर्णनञ्चाविरुद्धम्। न च तावतोपादानत्वव्यपदेशो गौणः; देवदत्तो गच्छति, देवदत्तो जानातीतिवन्मुख्यत्वोपपत्तेः। अत्र शरीरात्मनोर्गमनज्ञानाश्रयत्वेऽपि एतौ व्यपदेशौ मुख्यावेव भवतः।

एवं त्रयाणामुपादानत्वेन कार्यत्वेऽपि स्वभावासाङ्कर्यं ज्ञापयितुं 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः' 'मयाध्यक्षेण प्रकृतिस्सूयते सचराचरम्' इत्यादि श्रुतिस्मृतयः प्रवृत्ता वेदितव्याः। एवं सति हि 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं' 'तदैक्षत बहु स्यां प्रजायेय' 'सर्वं खल्विदं ब्रह्म तज्जलानिति' 'यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयस्सम्भवन्ति। यथा सतः पुरुषात्केशलोमानि तथाक्षरात्सम्भवतीह विश्वम्' 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा विब्रवीमि व. ब्रह्माध्यतिष्ठद् भुवनानि धारयन्' इत्यादीनां बह्वीनां श्रुतीनां ऐकार्थ्यं भवति।

एवं ब्रह्मणोऽपरिणामित्ववादिनीनां उपादानत्ववादिनीनां जगतो ब्रह्मात्मकत्ववादिनीनाञ्च श्रुतीनां परिष्वङ्गस्सुखोदर्को भवति। तत्त्वपरेषु ध्यानपरेषु च प्रदेशेषु चिदचिद्वस्तुशरीरस्य ब्रह्मण एकत्वात्तस्यैव कार्यकारणोभयावस्थत्वाच्छरीरभूतयोश्चिदचिद्वस्तुनोश्शरीरिण. परमात्मनश्च विलक्षणत्वाच्च द्वैताद्वैतवादा स्सुसङ्गता भवन्ति इति सर्वमवदातम् ॥

इति नीतिमालायां ब्रह्मस्वरूपनिर्णयाधिकारः षष्ठः ॥

---

श्रीः

# नीतिमालायां

## सप्तमाधिकार आरभ्यते.



अथ पुरुषस्वरूपं निरूप्यते। तस्मिन्नानाविधा वादाः। आत्मयाथात्म्यविद एवं वर्णयन्ति—

देहेन्द्रियादिव्यावृत्तो नित्यज्ञानः स्वयम्प्रभः।
असङ्ख्येयः परस्यांशः पुंसः कर्ता च पूरुषः॥

ननु देह एवात्मा भवितुमर्हति, अहम्प्रत्ययवेद्यत्वादात्मनः, स्थूलोऽहं कृशोऽहमित्यादौ स्थौल्यादिविशिष्टस्य देहस्याहमर्थसामानाधिकरण्याच्च। अहं जानामीति प्रतीतेर्देहस्य ज्ञानाश्रयत्वमप्याश्रयणीयम्। न च वाच्यं चेतनस्यात्मनो विशेषगुणवत्वात्कार्यद्रव्यवर्तिनो विशेषगुणस्य कारण(कारणगुण?)पूर्वकत्वनियमात्प्रत्येकं परमाणुषु चैतन्यस्याविद्यमानत्वात्तस्य परमाण्वारब्धशरिरविशेषगुणत्वमनुपपन्नम्। परमाणुषु प्रत्येकं चैतन्याभ्युपगमेऽप्येकस्मिन् शरीरे चेतनानन्त्यमापतेदिति। प्रत्यक्षबाधितत्वेन कालात्ययापदिष्टत्वाद्धेतोः। अथ चेन्द्रियाश्रयत्वं शरीरे दृश्यमानं सम्प्रतिपन्नादचेतनाद्धटादेरत्यन्तं व्यावर्तमानं शरीरमेव चेतनमवगमयति। तस्माद्देह एवात्मा भवितुमर्हति॥

नैवम्; अहं जानामीत्यात्मनः प्रत्यक्त्वेनावभासात्, इदमिति शरीरस्य पराक्त्वेनावभासाच्च। किञ्च अहम्प्रत्ययस्य शरीरगोचरत्वेऽभ्युपगम्यमानेऽवश्यमवयवप्रतिभासेनाप्यविनाभवितव्यम्। न ह्यस्ति सम्भवः अवयवी स्थूलः प्रकाशते अवयवास्तु न केचन प्रथन्त इति। न च नियमितबहिरिन्द्रियवृत्तेरवहितमानसस्याहमिति स्वात्मानमनुभवतः करचरणाद्यवयवा भासन्ते। तस्मान्न देहोऽहम्प्रत्ययगोचरः॥

यत्तु स्थूलोऽहं कृशोऽहमिति शरीरेऽहम्प्रत्ययो दृश्यत इति; नैवम्; तत्राप्यहम्प्रत्ययस्य चाक्षुषस्य देहप्रत्ययस्य च स्थौल्यकार्श्यादियोगे(गेन ?)देहमात्रानवभासकत्वात्। तस्मात्तत्राहम्प्रत्यययोऽन्तरशरीरं प्रत्यग्रूपं किमपि वस्तु गोचरयति। अत एव ममेदं शरीरमिति भेदव्यवहारः। न ह्यसौ व्यवहारस्साक्षात्प्रतीतिनिमित्तः प्रतीयमानः शिलापुत्रकशरीरव्यवहारवदौपचारिको भवितुमर्हति । तस्माद्देहव्यतिरेकेण चेतनस्य प्रत्यक्षसिद्धत्वात्सम्बन्धिनि देहेऽहंशब्दप्रयोगो लाक्षणिकः ॥

अथवा बाह्यविषयेषु परस्परविरुद्धरूपपरिमाणसङ्ख्यासङ्ग्रहणेन व्यतिरेकस्य स्फुटत्वादात्मनि तादृशरूपान्तराग्रहणेन देहप्रतिभासभ्रमोऽविवेकिनाम् ॥

किञ्च आत्मन इच्छानुविधायिसङ्कल्पाध्यवसायादिव्यापारत्वाच्छरीरस्य च तदिच्छानुविधायिशयनासनोत्थानादिचेष्टत्वाच्च शुक्तिरजतादिवदभेदभ्रमो भवत्येव । प्रणिहितमनसस्तु ज्ञातृतया सिद्ध्यन्तमनवयवमहमर्थमिदमिति परिस्फुरतः स्थूलावयविनः शरीरात्पृथगपरोक्षयन्त्येव ॥

भवति च प्रयोगः—शरीरमहम्प्रत्ययगोचरो न भवति, इदमिति गृह्यमाणत्वात्। घटादिवत्। तथा जानामीति प्रत्ययः शरीरविषयो न भवति, अप्रकाशमानतदवयवप्रतिभासत्वात् । यो नैवंविधः न स शरीरविषयो न भवति, यथा उभयवादिसम्मतः शरीरप्रत्यय इति। तस्माद्देहो नात्मा भवितुमर्हति ॥

मा भूच्छरीरमात्मा, इन्द्रियाण्यात्मा सन्तु। न हि तानि इदन्तया प्रथन्ते, येन देहवदात्मत्वं न स्यात्। न च देहवत्तान्युद्भूतरूपादिगुणानि स्थूलानि, येन तत्प्रतिभासे रूपावयवादिप्रतीतिः प्रसज्येत। तद्व्यापारफलञ्च ज्ञानं तद्गामि भवितुं युक्तम्, स्नानाध्ययनयागादिफलवत। अत एव **सत्यतपसा** द्रष्टुं चक्षुषा युक्तत्वात्। (द्रष्टुश्चक्षुष इत्युक्तम् ?)

नैवं भवितुमर्हति। न तावत्प्रत्येकमिन्द्रियाण्यात्मा, इन्द्रियान्तरदृष्टस्य इन्द्रियान्तरेण प्रतिसन्धानाभावप्रसङ्गात्। अस्ति च यमहमद्राक्षं, तमहं स्पृशामीति। अत एव न सम्भूयापि। न हि पञ्चेन्द्रियैरेकं वस्त्वनुभूयते। तथा एकैकेन्द्रियापाये तत्तदिन्द्रियानुभूतार्थ-

स्मरणमपि न भवेत्। एकेन्द्रियविगम एवात्मनः प्रायणप्रसङ्गश्च। तस्मान्नेन्द्रियाण्यात्मा। शरणागतपरित्यागस्य नृशंसतामालोच्य सत्यतपसस्तथा वचनम् ॥

अस्तु तर्हि मनश्चेतनः। तथा सति सर्वेन्द्रियानुभवेषु मनसो विद्यमानत्वात्पूर्वोक्त-दोषा न सम्भवन्ति। तदप्ययुक्तम्; तस्य चक्षुरादिवत्करणत्वेनात्मत्वासम्भवात्। स हि कर्ता। प्राणस्याप्यात्मत्वं न सम्भवति; बाह्यवायुवद्वायुत्वादेव तस्य चैतन्यानुपपत्तेः ॥

अस्तु तर्हि संविदात्मा। अजडत्वात्तस्यात्मत्वमुपपन्नञ्च। अजडत्वञ्च सत्तयैव प्रकाशमानत्वादुपपद्यते। न हि संवित्सती घटादिवदप्रकाशमाना दृश्यते, येन परायत्त-प्रकाशा अभ्युपगम्येत ॥

अथ मतम्-उत्पन्नायामपि संविदि विषयमात्रं ह्यवभासते नीलमिदमिति; न संवित्प्र-तीतिः। तस्मादिन्द्रियवत्संविदप्यर्थप्रकाशे सत्तयैव करणं भवति। ततोऽर्थगतागन्तुक-प्रकाशाख्यधर्मदर्शनेन संविदनुमान्य(स्य?)त इति, नैतद्युक्तम्; ज्ञानव्यतिरेकेणार्थधर्मस्य प्रका-शस्य रूपादिवदनुपलब्धेः। न च व्यवहारान्यथानुपपत्त्या स धर्मः कल्प्यः; उभयाभ्यु-पेतया संविदैव व्यवहारोपपत्तेः ॥

अपि चानवभासमानायां संविदि विषयावभासश्च नोपपद्यते; अवभासकत्वात्प्र-दीपवत्। तस्मान्नीलमिति प्रतीतौ संवित्प्रतीतिश्च विद्यत एव। अत एव हि घटमहं जानामि, नीलमिदं संवेद्मीति प्रतीतिव्यवहारौ सम्भवतः। अतोऽजडत्वात्संवि-दात्मेति ॥

नैतदेवम्; घटमहं वेद्मीति प्रत्यगर्थस्यात्मनो धर्मतया संविदः प्रतीतेः। संविदनुभूति-ज्ञानादिशब्दास्सम्बन्धिशब्दा इति हि शब्दार्थविदो वदन्ति। अतश्च संविदात्मा न भवति। तस्माद्देहेन्द्रियमनःप्राणसंविद्भ्यो व्यावृत्तोऽहं जानामीति ज्ञातृतया प्रतीयमा-नोऽहमर्थ एवात्मा ॥

किञ्चायमात्मनो देहेन्द्रियादिव्यतिरेकः श्रुतिसिद्धः। **बृहदारण्यके** बालाक्यजातशत्रु-संवादे 'तौ ह सुप्तं पुरुषमाजग्मतुः' इत्यादिना सुप्तपुरुषगमनयष्टिघातोत्थापनादिभिः देहादि-व्यतिरिक्तजीवप्रतिबोधनात् ॥

अथ स्यात्—ज्ञानस्य स्वयम्प्रकाशत्वमुभयवादिसिद्धम् । तस्य नीलादिवदिद-मित्यनवभासात्पराक्त्वाभावेन प्रत्यक्त्वञ्च विद्यते । अहमर्थस्य त्विदन्तयावभासाभावेऽपि विषयवज्ज्ञानोपलब्धिवेलायामेवोपलब्धेरर्थतः पराक्त्वं भवति । तस्माज्ज्ञानमेवात्मा, नाहमर्थ इति ॥

तद्विपरीतम् ; अहमर्थस्यैव स्वयम्प्रकाशत्वात्प्रत्यक्त्वाच्च । स्वस्मै प्रकाशमानत्वं हि साक्षात्स्वयम्प्रकाशमानत्वम् । तदहमर्थस्यैव । ज्ञानस्य तु स्वेन प्रकाशमानत्वेऽपि स्वस्मै स्वयम्प्रकाशमानत्वाभावान्न मुख्यम् । तदपि हि विषयवदात्मन एवावभासते । प्रत्यक्त्व-ञ्चाहमर्थस्यैव ; ज्ञानस्य तु पराक्त्वाभावमात्रमेव, न तु प्रत्यक्त्वम् । तस्य पराक्त्वाभावः स्वयम्प्रकाशत्वञ्चाहं जानामीत्यात्मधर्मतयावभासादेव भवति । अहमर्थस्य ज्ञानोपलब्धिवेला-यामेवोपलम्भादर्थतः परात्त्वसिद्धिश्चात एव परास्ता ॥

नन्वहमर्थो यदि(दि न) ज्ञानाधीनप्रकाशः स विषयाननुभववेलायां किमिति न प्रकाशते? भवत्पक्षे वा तदानीं ज्ञानं किमिति न चकास्ति? तदपि हि नित्यं स्वयम्प्रकाशं चाभ्युपगम्यते । अथ तदानीमपि विज्ञानं प्रकाशत एव । अहङ्कारविषयाभ्यामनुषङ्गाभावान्न व्यवह्रियत इति चेत्समानमिदमितरस्यापि ॥

अथ मतम्—अविक्रियः खल्वात्मा । ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम् । तद्विकार-भूतत्वादात्मनो न सम्भवति । तदभ्युपगमे देहस्येव जडत्वं प्रसज्येत । तस्माज्ज्ञातृत्वं ज्ञानेऽध्यस्तम् । किञ्च देहात्माभिमानवत एव ज्ञातृत्वोपलम्भादाध्यासिकं ज्ञातृत्वम् । तस्मान्नाहमर्थ आत्मा भवितुमर्हतीति ।

एतत्परीक्षकाणां धियं नाधिरोहति । ज्ञानस्य क्रियात्वाभावेन तदाश्रयस्य कर्तृत्वा-भावात् । तत्प्रभावदच्छद्रव्यं यावदात्मभाविधर्मत्वेन तस्य गुण इत्युच्यते । तस्मादात्मनो देह-तुल्यत्वं ज्ञातृत्वञ्च ज्ञानेऽध्यस्तमिति च(?) हास्यम् , अदृश्यमानस्याधिष्ठानानुपपत्तेः आत्मा-श्रयदोषप्रसङ्गात् । अन्तःकरणवृत्तिरूपज्ञानक्रियाकर्तृत्वं अविक्रिये ज्ञानेऽध्यस्तमिति नात्माश्रय-दोष इति चेत् , तदपि न ; तथाविधस्य ज्ञानस्यासिद्धत्वात् , ज्ञानमात्रस्यात्मत्वनिषेधाच्च ।

देहात्माभिमानवतो ज्ञातृत्वोपलम्भात् ज्ञातृत्वस्याध्यस्तत्वमुक्तं ज्ञानस्यापि समानम् । तदपि तद्वत एव ह्यवभासते ॥

किञ्च ज्ञातुरहमर्थस्य ज्ञानेऽध्यासं वदता(दतो ?) ज्ञानमहमित्यध्यासो भवेत् ; अधिष्ठानभूतायां हि शुक्तिकायां रजताध्यासः । तस्मान्नित्यज्ञानाश्रयः स्वयम्प्रकाशोऽहमर्थ एवात्मा ॥

ननु च ज्ञानं मे जातम्, ज्ञानं मे नष्टमिति तस्य जन्मनाशौ प्रतीयेते । नित्यत्वे चक्षुरादिकरणानां वैयर्थ्यं भवेत् । स्वापादिषु संज्ञालोपः श्रुतिसिद्धः । तत्कथं ज्ञानं नित्यमुच्यते ?

उच्यते—'जानात्येवायं पुरुषः न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते—'

'यथा न क्रियते ज्योत्स्ना मलप्रक्षाळनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥

यथोदपानकरणात्क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतस्सम्भवः कुतः? ॥

तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते' ॥

इत्यादिश्रुतिस्मृतिभिरात्मनो ज्ञातृत्वं ज्ञानस्य नित्यत्वञ्चावगम्यते । तस्मात्तस्य जन्मनाशव्यपदेशौ विषयानुषङ्गाननुषङ्गाभिप्रायेण । स्वापादिषु तस्य विलोपश्रुतिश्च तदभिप्राया । न च करणानां वैयर्थ्यम् ; नित्यस्यैव संसारि(सार ?)दशायां कर्मणा सङ्कुचितस्य निष्क्रमणद्वारतया क्लृप्तत्वात्तेषाम् । निष्क्रमणञ्च स्मृतिसिद्धम् ।

'इन्द्रियाणां हि चरतां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम्' ॥

इति हि मानवं वचः । अस्या निष्क्रमणश्रुतेः ज्ञानस्य द्रव्यत्वं सिद्धम् । तदेवमात्मा नित्यज्ञानः स्वयम्प्रकाशश्च । उक्तैरेव हेतुभिः क्षणिकविज्ञानात्मवादोऽपि निरस्तः ॥

अयं प्रतिशरीरं भिन्नोऽसङ्ख्यश्च । 'नित्यो नित्यानां चेतनश्चेतनानाम्' इत्यादिश्रुतेः । अजामन्त्रोऽप्यात्मनोऽसङ्ख्यातत्वमनुजानाति । 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति मुक्तसंसारिणोर्भेदप्रतिपादनात् । एवं श्रुत्यनुमतौ सत्यां सुखदुःखव्यवस्थाश्च नानात्वमवगमयन्ति । तस्मादसङ्ख्यो जीवः ॥

अणुश्चायमात्मा । 'तेन प्रद्योतेनैव आत्मा निष्क्रामयति ये वेके चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' इत्युत्क्रान्तिगत्यागतिश्रुतेः । 'एषोऽणुरात्मा चेतसा वेदितव्यः यस्मिन्प्राणः पञ्चधा संविवेश' इति साक्षादणुत्वश्रुतेश्च ।

न चाणुत्वे सकलशरीरव्यापिनी वेदना नोपपद्यत इति वाच्यम्; दीपस्येव प्रभारूपेण ज्ञानेन युगपत्सकलशरीरव्याप्तिसम्भवाद्वेदनोपपत्तेः । अपि च विभुत्वे सर्वशरीरेषु सर्वेषां विद्यमानत्वादुपलब्धिः प्रसज्येत । न सा कस्यचिदपि । न च शरीराणां स्वकीयपरकीयत्वाभ्यां व्यवस्थासिद्धिः; तेषामपि साधारण्यात् । न च तत्रादृष्टवशेन व्यवस्थोत्प्रेक्ष्या; तत्रापि च साधारण्यस्याविशिष्टत्वात् । तस्मादणुपरिमाणोऽयमात्मा ॥

अंशभूतश्चायमात्मा परमात्मनः । ननु नियन्तृत्वनियम्यत्वसर्वज्ञत्वकिञ्चिज्ज्ञत्वादिभिर्विरुद्धस्वभावत्वात्तयोरेकद्रव्यत्वाभावेन नांशांशित्वमुपपन्नम् ॥

उच्यते—न केवलमेकद्रव्यैकदेशत्वमेवांशत्वम्, किन्तु विशिष्टवस्त्वेकदेशत्वमप्यंशत्वम् । विशिष्टस्यापि हि वस्तुनो विशेषणमंश एव । दृश्यते हि विशेषणांशोऽयम्, विशेष्यांशोऽयमिति प्रतीतिव्यवहारौ । वर्णित एव प्रत्यक्परमात्मनोर्विशेषणविशेष्यभावः तयोश्शरीरशरीरित्वोपपादनेन । प्रकारान्तरेणांशत्वं च दुरुपपादम् । तथाहि—प्रथमं तावद्राजभृत्ययोरिव पृथग्द्रव्यत्वे अंशत्वं दुर्भणमेव । विवर्तपक्षेऽपि जीवस्यापारमार्थिकत्वादेवांशत्वं ब्रह्मणोऽशित्वं च नोपपद्यते ।

औपाधिकजीववादेऽप्यंशत्वं न शक्यवचनम्; ब्रह्मण एवोपाधिप्रयुक्तदोषानुषङ्ग-प्रसङ्गात्। न च घटाकाशादिवदवच्छिन्नप्रदेशानुषक्ता दोषा अनवच्छिन्ने ब्रह्मणि न प्रसज्येरन्निति युक्तम्; उपाधिना अमूर्तब्रह्मणोऽवच्छेदासम्भवात्। आकाशस्येव सम्भवतीति चेन्न; तत्रापि तदभावात्। आकाशस्यापि घटादिसंयोगमात्रमेव; नावच्छेदः, तदनर्हत्वात्तस्य। तस्माद्ब्रह्मण एवोपाधिसंयोगात्तत्प्रयुक्तदोषास्तस्यैव स्युः। ततश्च सर्वं वेदान्तवाक्यं व्याकुलं स्यात्। अतस्तस्मिन्नपि पक्षे जीवपरमात्मनोरंशांशिभावो नोपपद्यते॥

शक्तिविक्षेपपक्षेऽपि पूर्वोक्तप्रक्रियया शरीरशरीरिभावेनांशांशित्वमुच्यते। तदस्मा-कमविरुद्धमेव। नो चेदनन्तरोक्तप्रक्रियया परमात्मनस्सर्वदोषानुषङ्गः। तदेवं परमात्मनोंऽशः प्रत्यगात्मा॥

अयं कर्ता चाभ्युपगन्तव्यः। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'आत्मानमेव लोकमु-पासीत' इति स्वर्गापवर्गसाधनानुष्ठानविधानशास्त्राणामवैयर्थ्याद्धेतोः। अपि च 'एवमेवैष एतान्प्राणान्गृहीत्वा स्वे शरीरे यथाकाम परिवर्तते' इत्युपकरणोपादानविहारयोः कर्तृत्वमु-पदिशति। अतश्चायं कर्ता॥

अथ स्यात्—'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' इति ज्ञानपर्यायाया बुद्धेर्यज्ञादिकर्तृत्वमवगम्यते।

> 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
> अहङ्कारविमूढात्मा कर्ताहमिति मन्यते॥'

इत्यात्मनः कर्तृत्वं निन्ध्यते च। तस्माद् बुद्धेरेव कर्तृत्वं युक्तमिति॥

नैतदेवम्; बुद्धेर्नियोज्यत्वासम्भवात् कर्तृत्वानुपपत्तेः। स्वर्गादिफलोपभोगसमर्थं चेतनमेव हि शास्त्राणि तत्साधके(धने?)नियुञ्जते। न ह्यचेतना बुद्धिर्नियोक्तुं शक्यते। प्रकृतेः क्रियमाणानीत्यत्रापि नात्मनः कर्तृत्वं निन्ध्यते। किन्तर्हि [2] अधिष्ठानाद्यनेकहेतुनिर्वर्त्यायां

यदस्य निरपेक्षकर्तृत्वाभिमानादि तदनर्थकमित्युच्यते। 'अधिष्ठानं तथा कर्ते'त्यस्य कर्तृशब्देन व्यपदेशात्। अत एव हि—

'तत्रैवं सति कर्तारमात्मानं केवलं तु यः।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः॥'

इत्युच्यते। अतो देहेन्द्रियादिविलक्षण उक्तलक्षण एव पुरुषः॥

इति नीतिमालायां

पुरुषस्वरूपनिर्णयाधिकारस्सप्तमः॥



श्रीः

# नीतिमालायां

## अष्टमाधिकार आरभ्यते.



अथ विधिस्वरूपं निर्णीयते—

> तं शब्दभावनां प्राहुरेके कार्यं तु केचन ।
> आप्तस्य हितकामस्य नियोगं केचिदूचिरे ॥
> भाष्यकारोऽपि भगवानेवमेवान्वमन्यत ॥

शब्दभावना विधिः ; तस्याः फलभावनायां पुरुषप्रवृत्तिहेतुत्वात् । प्रवर्तको हि विधिर्भवति । ननु केयं शब्दभावना? उच्यते—सर्वशब्दानामर्थप्रतीत्युन्नेयोऽभिधाव्यापारः ; समस्तलिङादीनां त्वसौ व्यापारः तैरेवाभिधीयते । स पुरुषप्रवृत्तिभवनफलत्वाद्भावनेति प्रवर्तनेति च गीयते । न च वाच्यं न शब्दस्य व्यापारत्वं सम्भवति; गुणत्वाद्रूपवत् । अथ स द्रव्यमिष्यते, तथापि न सम्भवति ; विभुत्वादिति । अरुणिमादेर्गुणस्यापि व्यवच्छेदादिव्यापारसम्भवात् । विभूनां ज्ञानादिव्यापारस्य विद्यमानत्वात् । परिस्पन्दलक्षणस्तु व्यापारः तस्य न सम्भवत्येव ; न चासावस्माभिरपीष्यते । कस्तर्ह्यसौ व्यापारः? शब्दविषयज्ञानमेव । तद्योगी हि शब्दोऽर्थप्रतीतिं जनयति ॥ यथोक्तं 'शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्' इति । यमागन्तुकं धर्मं प्राप्य कार्याय प्रभवति स तस्य व्यापार इति उच्यते । ज्ञाता हि लिङादयः पुरुषं प्रवर्तयन्ति । तस्माज्ज्ञानस्य शब्दव्यापारत्वमुपपन्नम् ॥

न च वाच्यं शब्दस्याभिधाव्यापारवत्त्वमयुक्तम् । शब्दं जानामीति शब्दकर्मकतयावगतस्य ज्ञानस्यैव शब्दोऽर्थमभिधत्त इत्यत्र तत्कर्तृत्वाभ्युपगमप्रसङ्गात् । न ह्येकस्यैवैक-

स्मिन्व्यापारे कर्मत्वं कर्तृत्वञ्चोपपद्यते इति । परशुवदुपपत्तेः । परशुर्हि उद्यमननिपातनयाः कर्मापि सन् द्वैधीभावफलावच्छेदलब्धछिनत्तिपदाभिधानयोस्तयोरेव कर्ता भवति । तथा ज्ञानस्य शब्दकर्मकस्यापि अर्थप्रतिपत्तिलक्षणफलावच्छेदलब्धाभिदधातिपदाभिधानस्यार्थः कर्म । शब्दस्तु फलार्थप्रवृत्तेस्तस्मिन्नेव व्यापारे स्वातन्त्र्यविवक्षया कर्तेत्यनवद्यम् ।

अनेनैव न्यायेनार्थकर्मकस्याभिधाव्यापारस्यापि पुरुषप्रवृत्तिभवनफलावच्छेदलब्धभावनाभिधानस्य पुरुषप्रवृत्तिफलावच्छेदलब्धप्रवर्तनाभिधानस्य च प्रवृत्तिकर्मत्वं पुरुषकर्मत्वञ्च व्याख्यातम् । तेन एक एव व्यापारो यदा जानातिना विषयप्रकाशफलावच्छिन्नोऽभिधीयते, तदा विषयभूतशब्द एव तत्फलभाक् कर्म भवति, शब्दं जानातीति । यदा तु स एवार्थप्रतीतिरूपफलावच्छिन्नोऽभिदधातिनाभिधीयते, तदा प्रतीतिरूपफलभागर्थः कर्म भवति, अर्थमभिदधातीति । यदा तु भावनावच्छिन्नो भावयतिनाभिधीयते, तथा भावनालब्धा प्रतीतिः (प्रवृत्तिः?) कर्म भवति, प्रवृत्ति भावयतीत्ति । यदा तु प्रवृत्त्यवच्छिन्नः प्रवर्तयतिनाभिधीयते, यथा प्रवृत्तिफलभाक्पुरुषः कर्म भवति, पुरुषं प्रवर्तयतीति । न हि व्यापारस्वरूपाक्षिप्तः कर्मभावः। तथा सति हि चलत्यभिहितापि क्रिया गच्छत्यभिहितेव सकर्मिका स्यात् । तस्मादेक एव व्यापारः फलभेदेन बहुधा रूप्यमाणः तत्तत्कर्म(मैको ?) भवति ।

अस्त्वभिधाव्यापारश्शब्दस्य ; नत्वस्य पुरुषप्रवर्तकत्वं लिङाद्यभिधेयत्वञ्च सम्भवति । न हि कस्यचिदपि लिङादेरभिधाव्यापारत्वज्ञानमात्रात्प्रवृत्तिर्दृश्यते ; समीहितसाधनत्वावगमात्सर्वत्र प्रवृत्तेः । न चासावर्थप्रतीतिलक्षणफलोन्नेयशब्दान्तराभिधावत्तदभिधेयो भवितुमर्हति ॥

उच्यते--सत्यं फलसाधनत्वं प्रवर्तकत्वम् । । तत्तु न शब्दस्याभिधेयम् । यजेतेत्यादेश्शब्दाद्यागादेस्समीहितसाधनत्वावगतेर्लिङादियुक्तवाक्यश्रवणसमनन्तरं प्रवृत्तेर्दर्शनात्प्रवृत्तिहेतुभूतोऽभिधाव्यापारः शब्दान्तरव्यापारविलक्षणो लिङादिभिरभिहित इति निश्चीयते । न चाभिधाया अभिधानासम्भवः ; अभिधाशब्दवदुपपत्तेः । तस्माच्छब्दभावना विधिरिति केचिदाचक्षते ॥

तदयुक्तम् ; तत्सद्भावे प्रमाणाभावात् । न तावल्लिङादिशब्दः प्रमाणम् ; तत्र तस्य व्युत्पत्त्यभावात् । न च लिङादिशब्दश्रवणानन्तरभाविनी प्रवृत्तिः प्रमाणम् ; प्रवृत्ते(वृत्तौ?) तस्य निबन्धनत्वात् । यन्निबन्धना हि स्वात्मप्रवृत्तिर्दृष्टा तदेव तां दृष्ट्वा अशक्यानुमानम् । किञ्च शब्दस्य व्यापारो न सम्भवति । स हि द्विधा प्रयत्नलक्षणः परिस्पन्दलक्षणश्चेति ॥ अचेतनत्वान्न तावत्स प्रयत्नस्सम्भवति । न च परिस्पन्दः ; गुणत्वाच्छब्दस्य । यदुक्तम- रुणिमादेरिव गुणान्यव्यापारत्वं सम्भवतीति, तदपि न ; तत्रापि व्यापारासम्भव- स्याविशिष्टत्वात् ।

यच्चोक्तं शब्दविषयज्ञानमेव शब्दस्य व्यापार इति, तदप्ययुक्तम् ; ज्ञानस्यात्मगुण- त्वोपपादनेन तस्य शब्दव्यापारत्वासम्भवात् । न च शब्दोऽर्थमभिधत्त इत्यभिधाव्यापारस्य शब्दकर्तृकत्वञ्च युक्तम् ; तस्य ज्ञानपर्यायत्वाङ्गीकारात् । ज्ञानस्यात्माश्रयत्वेन शब्दाश्रय- त्वानुपपत्तेः ।

यदपि केनापि प्राकट्यं शब्दस्य व्यापार इत्युक्तम्, तदपि प्राकट्यस्य निरस्तत्वादनुपपन्नम् । अपि च व्यापाररहितस्यापि शब्दस्याभिधाव्यापारबोधकस्य लिङादेरिव बोधकत्वञ्चानुपपन्नम् । किञ्च यथा निर्व्यापारं ज्ञानमर्थप्रकाशनसमर्थमङ्गीकृतम् , तथात्रापि स्यात्—यथोक्तं सौत्रं बुद्धिजन्मपदं व्याचक्षाणैः न्यायाचार्यैः ॥

' व्यापारः कारकाणां हि दृष्टो जन्मातिरेकतः ।
प्रमाणेऽपि तथा मा भूदिति जन्म विवक्ष्यते ' ॥ इति ॥

तथा वर्णैरुत्पद्यमानोऽभिव्यज्यमानो वा शब्दो बोधहेतुर्भवतीति किमनुपपन्नम्? अत इदमपि निरस्तम्—पुरुषप्रवृत्तिभवनानुकूला लिङ्ज्ञानकरणिकार्थवादोदितप्राशस्त्यलक्षणेति- कर्तव्यतावती शब्दभावना प्रेरणात्मा कल्प्यत इति । तस्मान्न शब्दभावना नाम काचित्सि- द्ध्यति । यद्यपि सिद्ध्येत्तथापि न तस्य विधित्वं सम्भवति ; प्रवर्तनात्वाभावात् । न हि शतकृत्वः कुरुष्वेत्युक्ते कश्चित्प्रवर्तते । तेन........मरार्तस्याचेतनस्य शब्दस्य प्रवर्तकत्वं(त्वं न?) सम्भवति ।यदि च शब्दः प्रवर्तकः स्यात् , प्रवर्तयेदव्युत्पन्नमपि । अस्तु शब्दः प्रवर्तकः,

तथापि तन्निबन्धनायाः प्रवृत्तेर्वायाद(त्तेर्यागा?)दिप्रवृत्तिवत्पुरुषार्थभावो न सम्भवति। तस्माच्छब्दभावना विधिरिति पक्षो निष्प्रमाणकः ॥

अन्ये तु वदन्ति—कार्यबुद्धिस्सर्वत्र प्रवृत्तिहेतुः। तथाहि—यः पुरुषः पुरुषान्तरेणाप्रवर्तितः प्रवर्तते, यश्च स्वयं कामात्क्रोधाद्भयाद्वा प्रवर्तते, स सर्वोऽपि ममेदं कार्यमिति प्रतीत्यैव प्रवर्तते। तस्मात्कार्यमेव लिङाद्यर्थो विधिः , साक्षात्प्रवृत्त्युपधानादितरेषां व्यभिचाराच्च। तच्च कार्यं कृत्यधीनात्मलाभम्। तच्च लोके क्रियैव। तत्र क्रियायाः कार्यत्वं लिङादिभिः प्रतिपाद्यमानं वेदेऽपि स्वर्गकामो यजेतेत्यस्मिन्वाक्ये प्रतिपत्तुं प्रवृत्तो विरोधं पश्यति ; कथं स्वर्गकामस्य यागक्रिया कर्तव्या भवेत्? स्वर्गकामो हि स्वर्गसाधने प्रवर्तते। न यागस्स्वर्गसाधनं भवति, क्षणिकत्वादिति। एवं विरोधं पश्यन् लिङाद्यर्थ एव नूनं क्रियाव्यतिरिक्तः कश्चिदलौकिक इति मन्यते। तस्य कार्यत्वात्तज्ज्ञानं प्रवृत्तिकारणम्; स्थायित्वात्स्वर्गसाधना(नत्वो?)पपत्तेः स्वर्गकामस्यानुष्ठेयः; अलौकिकत्वादपूर्वशब्दवाच्यः; स्वात्मनि पुरुषं नियुञ्जानो नियोग इति गम्यते। तस्मिंश्च क्रियातिरिक्तकार्यवाच्ये निश्चिते लिङादीनां यो लोकप्रयोगः स लाक्षणिको भवति ; अनेकार्थत्वस्यान्याय्यत्वात्। एवञ्च नैमित्तिकनिषेधाधिकारयोरसत्यपि फलेऽपूर्वमेव वाक्यार्थो भविष्यति ; तस्यैवाभिधेयत्वादिति ॥

एतदप्यनुपपन्नम् ; कार्यस्य दुर्निरूपत्वान्निष्प्रमाणकत्वाच्च। तथाहि—न तावत्कृतिसाध्यं कार्यम् ; यागादेर्धात्वर्थस्य कार्यत्वप्रसङ्गात्। न च कृत्युद्देश्यं कार्यम् ; स्वर्गादेः फलस्य तथात्वापातात् ॥ नापि कृतिसाध्यं कृत्युद्देश्यं वा यद् भवति तत्कार्यमित्यपि वक्तुं शक्यम् ; तस्य कृत्युद्देश्यत्वासम्भवात्। कृतिं प्रति प्रयोजनं कृत्युद्देश्यं भवति। पुरुषस्य कृत्यारम्भप्रयोजनं कृतेश्च प्रयोजनम्। तच्च सुखं दुःखनिवृत्तिर्वा। न हि कार्यं तयोरन्यद(न्यतरद?)पि भवति। तस्मात्तस्य कृत्युद्देश्यत्वासम्भवात् कार्यत्वञ्च न सिद्ध्येत्। अथ तस्य कृतिप्रयोजनत्वाभावेऽपि प्रयोजनभूतस्य स्वर्गादेः साधनत्वेनार्थ्यत्वात्तत्कृत्युद्देश्यमित्युच्यते, तथा सति इष्टसाधनस्य विधित्वमङ्गीकृतं स्यात्। तस्माद्दुर्निरूपं कार्यम् ॥

अपि चास्य कार्यस्य न विधेयत्वं(विध्यर्थत्वं ?)सम्भवति ; तज्ज्ञानस्य प्रवृत्तिहेतुत्वाभावात् । न हि बलवदुद्वाह्योऽयं तदभावः(मृद्वारः ?)निपुणविज्ञेयः सुवर्णस्य वर्ण इत्यत्र-कार्यत्वज्ञाने सत्यपि प्रवृत्तिर्दृश्यते ॥

अथोच्येत—इदं मम कार्यमिति यत्प्रतीयते तत्कृत्युद्देश्यमिति, तदप्ययुक्तम् ; इदं मम कार्यमित्येवंरूपस्यास्य प्रमाणज्ञानत्वाभावात् । किन्तर्हि ? इदं कार्यमिति पुरुषस्य चिकीर्षारूपस्सङ्कल्पः । तस्मान्न वाक्यार्थज्ञानमिदम् । वाक्यं हीदं यागस्य कार्यमिति वदति ; न ममेदं कार्यमिति । अत एव वाक्यार्थं प्रतिपद्यमानोऽपि ममेदं कार्यमिति सङ्कल्पानुपपत्तेः विधिमतिक्रामन् दृश्यते ॥

यदुक्तं स्वर्गकामो यजेतेत्यत्र स्वर्गसाधनत्वान्यथानुपपत्त्या क्रियाव्यतिरिक्तं किञ्चित्कल्पनीयमिति, तन्न ; यागादेरि(रे?)व स्वर्गसाधनत्वस्य वक्ष्यमाणत्वात् । तस्मान्नापूर्वमपि विधिर्भवति ॥

त्रय्यन्तनिष्ठास्त्वेवमातिष्ठन्ते—आप्तस्य हितकामस्य नियोगो विधिः प्रवर्तनेति पर्यायाः । प्रयोक्तृपुरुषधर्मत्वेन तस्य व्युत्पत्तिः । ननु च शक्तिग्रहणं हि व्युत्पत्तिः, कथं पुरुषप्रवर्तनायां सम्भवति ? उच्यते—न हि शक्तिग्रहणं व्युत्पत्तिः । किन्तर्हि ? सहदर्शनम् । तथाहि—बालः शब्दप्रयोगं परेषां प्रवृत्तिं बहुकृत्वः सह पश्यति । तथादृष्ट्या प्रौढसंस्कारस्सन् लोकोत्तरे(कालान्तरे?) यथा(दा?) शब्दं शृणोति, तदा तस्याजिज्ञासमानस्यैवार्थेषु स्मृतिरुपजायते । स्मृताश्चार्थास्स्वयमेव संसर्गप्रतीतिमुपजनयन्ति । तस्मात्सहदर्शनं व्युत्पत्तिः। अत एव लिङादियुक्तेषु वाक्येषु बालः प्रयोज्यपुरुषस्य प्रवृत्तिदर्शनात्प्रवृत्तिहेतुविज्ञानमनुमाय तत्र च शब्दसमूहस्य शक्तिमवधारयति । पुनरावापोद्वापाभ्यामर्थविशेषस्य(षे ?) शब्दविशेषस्य शक्तिविशेषं व्यवस्थापयतीत्येतन्न समीचीनम् ; बालस्य तथाविधोहापोहसामर्थ्याभावात् ॥

किञ्च प्रवृत्तेः कार्यज्ञानस्यैव भूयोदर्शनेन व्याप्त्यवगमात्प्रागेव काञ्चिच्छब्दात्प्रवृत्तिं पश्येदपि । कथं कार्यज्ञानमनुमीयते ; कथं वा शब्दस्य लिङ्गत्वमवगच्छेत् । न ह्यनुमानव्युत्प-

त्ति(त्ते ?)रूर्ध्वमेव शब्दानन्तरप्रवृत्तिदर्शनमित्येव स्थापयितुं शक्यम् । तस्माद्व्याप्तिग्रहणस्मरणाभ्यां पूर्वं समकालं वा शब्दं प्रवृत्तिं च सह दृष्टवतश्शब्दादर्थप्रतीतिर्भवति । स्मृताश्चार्था अनिर्ज्ञातशक्तयस्संसर्गप्रतीतिमुपजनयन्ति । सम्बन्धयोग्येन विभक्त्यर्थकारकादिरूपेण सहैव स्मृता अर्थास्संसर्गप्रतीतिं कुर्वन्ति । यदा चायं बालः प्रौढस्सन्नूहापोहसमर्थो भवति, तदा आत्मनश्शब्देभ्यो ज्ञानोत्पत्तिं दृष्ट्वा शब्दानां ज्ञानजनने शक्तिमवगच्छेदपि । तस्माच्छब्दार्थसम्बन्धज्ञानात्प्रागेव शब्दाज्ज्ञानोत्पत्तेः 'शब्दादर्थज्ञानमनुमानमेव ; न प्रमाणान्तरम्' इति बौद्धानां पक्षः प्रत्युक्तः । अवश्यं हि सम्बन्धावगमपूर्विका सम्बन्धिदर्शनेन सम्बन्ध्यन्तरे बुद्धिरनुमानेऽन्तर्भवत्येव । तस्मात्सहदर्शनमेव व्युत्पत्तिः ॥

ननु न हि प्रयोजकस्य पुरुषस्य प्रवर्तना प्रयोज्यपुरुषविषया लिङादिभिस्सह बालेन ज्ञायते ; येन लिङार्थौ (ङादीन् ?) श्रुत्वा बालस्तस्याः स्मरेत् ॥

अत्रोच्यते—यथा बालस्सहदर्शनेन व्युत्पन्नः परवचनात्परस्य प्रवृत्तिं पश्यन्स्वयमस्मान्प्रवर्तयितुकामो वाक्यं प्रयुङ्क्ते । तदात्मनि प्रत्यक्षेण परप्रवर्तनां पश्यति । तां दृष्ट्वैवमवगच्छति—नूनं सर्वेऽपि पुरुषाः परप्रवृत्त्यर्थं हि लिङादि प्रयुञ्जानाः परोऽस्मिन्नर्थे प्रवर्ततामिति सङ्कल्परूपामाज्ञानुज्ञादिशब्दवाच्यां प्रवर्तनां कृत्वैव प्रयुक्तवन्त इति । तदेवं सर्वमुपपन्नम् ॥

ननु च यदि पुरुषस्य हितप्रवर्तनां लिङादयोऽभिदध्युः, तदा वैदिकानि वाक्यानि पौरुषेयाणि प्रसज्येरन् । पुरुषस्य हितप्रवर्तना लोके स्वकृतादेव वाक्यात्प्रतीयते, स्वप्रयुक्तस्य वा पुरुषस्य वाक्यात् ॥

उच्यते—राजभृत्यानां हि राज्ञः केनापि कारणेन मतं जानतामप्रयुक्तानामपि राजवचनाज्ञापनदैः पुरुषै राजाज्ञायाः प्रतिपत्तिर्दृश्यते , तथा हि—राजभृत्या राजाज्ञां तेनाबोधिता अप्येवं राजा युष्मानाज्ञापयतीति परेभ्यः कथयन्ति । ततस्तेऽपि राजाज्ञां प्रतिपद्यन्ते । एवं वैदिकानि वाक्यानि पुरुषाज्ञां प्रतिपादयिष्यन्ति ।

अथ स्याद्वैदिकान्यपि वाक्यानि राजपुरुषवाक्यवत्पुरुष एवमाज्ञापयतीति प्रतिपादयेयुः; न पुनरित्थं कुर्यादिति । मैवम् ॥ राजमयतां (राजभयात् ?) कुरु माकार्षीरित्यपि

वचनदर्शनात् । अथवा विधिप्रतिषेधानामित्थमीश्वराज्ञेत्येवंविधेन वाक्येनैकवाक्यतया विधिप्रतिषेधा ईश्वरस्याज्ञाः स्युः । तथा 'वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति' इत्यादिकेन वचनेन धर्मान्विधाय 'एष आदेशः, एष उपदेशः, एषा वेदोपनिषत्, एतदनुशासनम्' इति हि विधीनामाज्ञारूपत्वं श्रूयते । किञ्च 'एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवान्दर्विं पितरोऽन्वायत्ताः' इति श्रुतिः पूर्वोक्तमनुशासनं परमपुरुषस्येति ज्ञापयति । किञ्च 'दिशः श्रोत्रे वाग्विवृताश्च वेदाः' इति वेदानामीश्वरवचनत्वं श्रूयते । न च नित्यत्वेऽपि वेदानामीश्वरनियोगत्वं विधीनामनुपपन्नम् । 'अग्नीदग्नीन्विहर' इत्यादिवदुपपत्तेः । तस्मात्पुरुषनियोगो विधिः । अत एव स्वर्गकामो यजेतेत्यत्र भङ्गुरयागस्य स्वर्गसाधनत्वानुपपत्त्या क्रियाव्यतिरिक्तं किञ्चित्कल्प्यमित्येतदपि परास्तम्; अतीतेऽपि यागे स्वाज्ञाकरणेनाराधितस्य परमपुरुषस्य हविर्भोजनेनाराधितानामिन्द्रादिदेवतानां च फलप्रदातृत्वेन यागस्य स्वर्गसाधनत्वोपपत्तेः ॥

ननु चापूर्वस्यानभ्युपगमे प्रयाजादीनामङ्गत्वन्न स्यात् । न हि देवतादि तत्करणशरीरं निष्पादयन्ति । नापि तस्योपकुर्वन्ति । काम्यानां फलसद्भावेऽपि नित्यनैमित्तिकानां फलाभावात् यावत्फलमनवस्थानाच्च ॥

उच्यते—तत्रापीश्वराज्ञया प्रवर्तमानस्येश्वरसन्तोषफलं भविष्यति; लौकिकसेवकस्य सेव्यसन्तोषवत् । न च वाच्यं कर्मणां देवताराधनत्वे देवतां प्रति कर्माण्युपसर्जनानि स्युः । ततः तस्य देवताप्रयुक्तत्वादनुष्ठानस्य देवतानां कर्मानङ्गत्वात् तदभिधायिनां मन्त्राणां कर्माङ्गप्रकाशरूपदृष्टकार्यस्याभावात्फलप्रकाशनस्य प्रोत्साहनस्यान्यस्यैव वाऽभावाददृष्टार्थानां सतां प्रयाजादीनामिव विकृतिषु अनूह एव स्यादिति । आराध्यभूतानां देवतानामेव कर्माणि प्रति कारकत्वरूपेणाङ्गत्वस्यापि विद्यमानत्वात् । यथा लोके वयस्यैः स्वसेनापतिभिस्सह कन्दुकमृगयादिलीलारसमनुभवतां राज्ञां तत्र तत्र गुणभावः, तत्रैव तेषामपराधदर्शने स्वाभाविकं प्रभुत्वं च विद्यते, तथा देवतानामपि क्रियानिर्वर्तकत्वेन क्रियाङ्गत्वं देवपूजाद्यात्मनो यागादेस्तदाराधनत्वेनाराध्यत्वं 'स एवैनं भूतिं गमयति' इत्यादिवाक्यत्रयोदितफलप्रदातृत्वेन प्रभुत्वञ्चाविरुद्धम् ॥

ननु च 'इष्टापूर्तं बहुधा जातं जायमानं विश्वं विभर्ति भुवनस्य नाभिः' 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इत्यादिभिः परमपुरुषस्यैव सर्वेषु यागेषु हविर्भोक्तृत्वं फलप्रदातृत्वञ्चावगम्यते। तत्कथमिदमुपपद्यते। 'अङ्गान्यन्या देवता' इति श्रुतेः परमपुरुषस्य शेषभूतानीतराणि दैवतानि। तस्मात्तेषामाराधनमेव तदाराधनं, भोगश्च तथैवेति कृत्वा तस्य सर्वेषु यागेषु भोक्तृत्वाभिधानं प्रभुत्वाभिधानञ्च भवति। भृत्यपोषणे स्वामिनस्सन्तोषो भवत्येव ॥

एवं यागादिकर्मभिरुपासनेनाराधितस्य परमपुरुषस्य भोगापवर्गरूपफलप्रदातृत्वं श्रूयते—'स वा एष महानज आत्मान्नादो वसुदानः, 'एष ह्येवानन्दयाति' इति। एवमिन्द्रादिदेवतानां परमपुरुषस्य चाराध्यतया (ध्यता ?) स्वयं (?) उपपद्यते। तासां देवतानां तत्तदैश्वर्यफलप्रदातृत्वशक्त्यादिगुणयोगः परमपुरुषप्रसादलब्ध इति तासां तस्य च फलप्रदातृत्वञ्चोपपन्नम् ॥

तदेवं लोके प्रयोक्तृपुरुषनियोगो विधिः, वेदे तु परमपुरुषनियोग इति सर्वत्र पुरुषनियोगो विधिः। यत्सहदर्शनं व्युत्पत्तिरित्युपपादितम् , यश्च पुरुषनियोगो विधिरिति तदेतद् द्वयमपि 'तैरेव शब्दैस्तेषु तेष्वर्थेषु स्वात्मनां बुद्ध्युत्पत्तिं दृष्ट्वा शब्दार्थयोस्सम्बन्धान्तरादर्शनात्सङ्केतयितृपुरुषाज्ञानाच्च तेषु तेष्वर्थेषु शब्दानां प्रयोगो बोधकत्वनिबन्धन इति निश्चिन्वन्ति' इति भाष्यात् 'स्वशासनानुवर्तिनः परमपुरुषोऽनुगृह्णाति, तदतिवर्तिनो निगृह्णाति' इति भाष्याच्च **भगवता भाष्यकारेणा**ङ्गीकृतमिति गम्यते। तस्मात्सर्वं समीचीनम् ॥

इति नीतिमालायां

विधिस्वरूपनिर्णयाधिकारोऽष्टमः ॥



श्रीः

# नीतिमालायां

## नवमाधिकार आरभ्यते.



अथ निश्श्रेयससाधनभूतं वेदनं निर्णीयते—

> वेदान्तवाक्यजं ज्ञानमपवर्गस्य साधनम् ।
> केचिदाहुरथान्ये तु साङ्ख्ययोगसमुच्चयम् ॥
>
> विवेकाद्यैरनुद्धर्षपर्यन्तैस्सप्तहेतुभिः ।
> निष्पन्नं भक्तिपर्यायं वेदनं वेदवित्तमाः ॥

'वेदान्तविज्ञानसुनिश्चितार्थास्सन्न्यासयोगाद्यतयश्शुद्धसत्त्वाः। ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' 'तरति शोकमात्मवित्' इत्यादिश्रुतिभिर्वेदान्तवाक्यजन्यं ज्ञानमविद्यानिवृत्तिलक्षणमोक्षसाधनतयावगतम् । तस्माद्वेदान्तवाक्यानि यज्ञादिनिबर्हितकल्मषस्य ब्रह्मविषयकाविद्यानिवर्तकं ज्ञानं जनयति। तज्ज्ञानं यावदन्तःकरणबहिःकरणजन्यविपरीतचेष्टा न शाम्यति, तावन्तं कालं प्रतिबद्धफलं तिष्ठति। तत्र श्रवणेन शक्तितात्पर्यावधारणे कृते मननिदिध्यासनाभ्यामसम्भावनाविपरीतसम्भावनानिरासे च कृते तदेव शब्दजन्यं ज्ञानमपरोक्षरूपं सदशेषाज्ञानं तत्कार्यनिर्लेपं निवर्तयति। न च शब्दस्य परोक्षज्ञानहेतुत्वन्न सम्भवतीति वाच्यम्; प्रमेयवैषम्यादुपपत्तेः। तथाहि—घटाद्यानात्मवस्तु स्वविषयाज्ञाननिवृत्तिव्यतिरेकेण स्वसंसर्ग(र्गि)प्रकाशमपि प्रमाणफलत्वेनापेक्षते; अस्वयम्प्रकाशरूपत्वात्। आत्मवस्तु स्वयम्प्रकाशत्वात्स्वाज्ञाननिवृत्तिव्यतिरेकेण प्रकाशसंसर्गं प्रमाणफलत्वेन नापेक्षते। ततश्चावधरितशक्तितात्पर्यैर्निश्चयशब्दजन्यविज्ञानेन स्वविषयाज्ञाननिवृत्तौ ब्रह्म स्वयमेवापरोक्षं

भवति। न च ध्यानेनाविद्यानिवृत्तिस्सम्भवति ; तस्य प्रमाणज्ञानत्वाभावान्मिथ्याभूतस्य संसारस्य प्रमाणज्ञानैकनिवर्त्यत्वाच्च। तस्माद्वाक्यार्थज्ञानं निश्श्रेयससाधनमिति केचिदाहुः।

तदयुक्तम्; 'आत्मा वा अरे ज्ञातव्यः' 'आत्मा वा अरे द्रष्टव्यः' इत्यादिभिरात्मध्यानस्य विधेयत्वावगमाद्वाक्यार्थज्ञानस्याविधेयत्वाच्च। न च वाक्यजन्यज्ञानेनाविद्यानिवृत्तिर्दृश्यते। यदुक्तं प्रथमं वाक्यार्थज्ञानं प्रतिबद्धफलं तिष्ठति; तत्र श्रवणादिभिः प्रतिबन्धे निवृत्ते तदेवाविद्यां निवर्तयतीति॥ तदप्ययुक्तम्; बाधकज्ञानेन प्रतिबन्धकहेतूनामपि मिथ्यात्वेन बाधितत्वात्प्रतिबन्धासम्भवात्। द्विचन्द्रज्ञानवत्सम्भवतीति चेत्, नैवम्; तत्र द्विचन्द्रज्ञानहेतोः पारमार्थिकस्य काचादेरौषधविनाश्यत्वेन ज्ञानसाध्यत्वाभावात्तत्सम्भव उपपन्नः। तस्माद्वाक्यार्थज्ञानस्य प्रतिबद्धफलत्वमनुपपन्नम्।

न चासम्भावनाविपरीतसम्भावनानिरसनयोः प्राग्बाधकज्ञानं नोत्पद्यत इति वाच्यम्; सामग्र्यां सत्यां ज्ञानानुत्पत्त्यनुपपत्तेः। यच्चोक्तं शब्दोऽपरोक्षज्ञानं जनयतीति, तदप्यसङ्गतम्; अदृष्टत्वात्।

यदप्युक्तं प्रमेयवैषम्यात्तदपरोक्षं भवतीति, तदपि न मनोहरम्; आत्मनः प्रमेयत्वानङ्गीकरणात्। प्रमाणज्ञानेन तद्गताज्ञाननिवृत्त्या तस्यापि प्रमेयत्वमौपचारिकं विद्यत इति चेत्, तदपि न सिद्ध्येत्; तस्याज्ञानतदाश्रयत्वादेर्निरस्तत्वात्। यच्चेदमुक्तं संसारस्य मिथ्यात्वेन प्रमाणज्ञानेन निवर्त्यते, न ध्यानेनेति; तदपि तस्य पारमार्थ्योपपादनान्निरस्तम्। 'वेदान्तविज्ञानसुनिश्चितार्थाः' इति श्रुतिश्च न वाक्यजन्यज्ञानस्यापवर्गसाधनत्वं ब्रूते; 'सन्न्यासयोगाद्यतयश्शुद्धसत्त्वाः' इति ज्ञानोत्तरकालभाविनस्सन्न्यासादेरपि परिकरतया प्रतिपादनात्। तस्मान्न वाक्यजन्यज्ञानं निश्श्रेयससाधनमिति॥

अन्ये तु वदन्ति—साङ्ख्ययोगोऽप(गाव?)वर्गस्य साधनम्। तत्त्वानामवधारणं साङ्ख्यम्। तद् द्विविधम्, श्रवणं मननञ्चेति। तत्र सविशेषध्यानं सम्भूतिरित्युच्यते। निर्विशेषध्यानं विनाश इत्युच्यते। कर्मयोगस्तु वाक्कायबाह्यार्थजः। तच्च त्रिविधमनुष्ठानम्—ईश्वरार्थानां कर्मणां करणम्, इतरेषाञ्च त्यागः, सर्वफलसन्न्यासश्चेति। एवंविधाभ्यां समुच्चिताभ्यां

साङ्ख्ययोगाभ्यामपवर्गप्राप्तिः। 'तत्कारणं साङ्ख्ययोगाधिगम्यम्' इति श्रुतेः। ज्ञानयोग-कर्मयोगयोस्तु समुच्चयोऽन्यत्र परिव्राजकेभ्यः। तेषां तु ज्ञानयोगः। सम्भूति-विनाशयोस्तु सर्वत्र समुच्चयो भवति। ज्ञानयोगकर्मयोगयोस्सम्भूतिविनाशयोश्च समुच्चयः श्रुतिसिद्धः। 'विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह', 'अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते।' सम्भूतिञ्च विनाशञ्च यस्तद्वेदोभयं सह। विनाशेन मृत्युं तीर्त्वा सम्भूत्यामृतमश्नुते' इति। यथोक्तं—'समुच्चयांस्त्रीनिह वर्णयन्ति साङ्ख्यस्य योगस्य च वै स पूर्वः। ज्ञानक्रियायोगगतो द्वितीयस्तथैव सम्भूतिविनाशजोऽन्यः।' इति। तस्मात्साङ्ख्ययोगाभ्यामपवर्ग इति॥

तदप्यनुपपन्नम्। 'तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते' इत्यादिभिः श्रुतिभिर्वेदनस्यैवापवर्गसाधनत्वश्रवणात्, तदितरस्य साधनत्वनिषेधाच्च। तत्कारणं साङ्ख्ययोगाधिगम्यमित्याद्युक्तलक्षणयोस्साङ्ख्ययोगयोरपवर्गफले समुच्चयो न विधीयते। अपि तर्हि 'ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्' इति स्मरणात्साङ्ख्ययोगशब्दौ ज्ञानयोग-कर्मयोगवचनौ। ताभ्यामनुष्ठिताभ्यां परमात्मसाक्षात्कारो भवतीत्युच्यते; अधिगतेर्ज्ञानार्थत्वात्, पूर्वोक्तश्रुतिविरोधाच्च। विद्यां चाविद्यां चेत्यनेनापि विद्याविद्ययोर्नापवर्गफले समुच्चय उच्यते। मृत्युतरणामृतत्वप्राप्तिफलभेदस्य तयोः सुव्यक्तत्वात्। अत्राविद्याशब्देन विद्येतरत्वाद्विहितं वर्णाश्रमप्रयुक्तं कर्मोच्यते। मृत्युशब्देन च विद्योत्पत्तिविरोधि प्राचीनं कर्मोच्यते। सम्भूतिञ्च विनाशञ्चेत्यस्यापि वाक्यस्यायमेवार्थः—विदुषो विद्यासाध्यस्यापवर्गस्य सम्यगभिवृद्धिरूपत्वात्सम्यगभिवृद्धिपर्यायस्सम्भूतिशब्दो लक्षणया तत्साधनभूतविद्यावचनः। कर्मफलस्य विनाशगर्भत्वात्फलवचनो विनाशशब्दो लक्षणया तत्साधनकर्मवचनः। अनयोस्सम्भूतिविनाशशब्द-योस्सविशेषनिर्विशेषध्यानवाचित्वं लक्षणयापि न सिद्ध्यति। तस्माद्यथोक्त एवार्थः। अत-स्साङ्ख्ययोगौ समुच्चितावपवर्गसाधनमिति न युक्तम्॥

त्रय्यन्तविदग्रेसरास्त्वेवमभिदधति—'ब्रह्मविदाप्नोति परम्' 'रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्' इत्यादिभिर्वाक्यार्थज्ञानविलक्षणं तन्मूलं विवेकादिपरिशुद्धमनोजन्यं ध्यानोपासनध्रुवानुस्मृतिशब्दवाच्यं साक्षात्कारसदृशञ्चेत्यद्भुतपरमपुरुषार्थप्रियत्वेन स्वय-मप्यत्यर्थप्रियत्वमापन्नं तत एव भक्तिशब्दवाच्यं वेदनमपवर्गसाधनतया विधीयते। कुत इद-

मवगम्यत इति चेत्, 'अनुविद्य विजानाति' 'विज्ञाय प्रज्ञां कुर्वीत' इति श्रुतेः विज्ञानपर्यायस्य वेदनस्य वाक्यार्थज्ञानमूलत्वं तत एव तद्वैलक्षण्यं चावगम्यते। 'आहारशुद्धौ सत्त्वशुद्धिः' 'शान्त उपासीत' 'सदा तद्भावभावितः' 'क्रियावानेष ब्रह्मविदां वरिष्ठः' 'यज्ञेन दानेन तपसानाशकेन' 'सत्येन लभ्यः' 'नायमात्मा प्रवचनेन लभ्यः' 'शान्तो दान्तः' इत्यादिशास्त्रैर्विवेकादिसप्तकसाचिव्यं मनसोऽवगम्यते। विवेकादिभ्यो वेदनलब्धिर्**ब्रह्मनन्दिना**भिहिता-'तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः' इति। सात्त्विकाहारसेवया शरीरेन्द्रियशोधनं विवेकः। कामानभिष्वङ्गो विमोकः। उपास्यसंशीलनमभ्यासः। यथाशक्ति वर्णाश्रमधर्मानुष्ठानं क्रिया। आर्जवाद्यात्मगुणाः कल्याणानि। शोकहेतुषूपस्थितेष्वपि मनसोऽवसादराहित्यमनवसादः। हर्षहेतुषूपस्थितेष्वप्यतिसन्तोषराहित्यमनुद्धर्षः। परिशुद्धं मन एवास्य वेदनस्य साधनमिति च 'मनसैवानुद्रष्टव्यम्' 'दृश्यते त्वग्र्यया बुद्ध्या' 'न चक्षुषा गृह्यते नापि वाचा' 'मनसा तु विशुद्धेन' इति श्रुतेरवगम्यते। ध्यानोपासनध्रुवानुस्मृतीनां वेदनपर्यायत्वं तत्तच्छब्दनिर्दिष्टानामपवर्गसाधनत्वोपदेशाद्वेदनव्यतिरिक्तस्य साधनत्वनिषेधश्रुतेश्चावगम्यते। 'यदा पश्यः पश्यते रुक्मवर्णं' 'तस्मिन् दृष्टे परावरे' इत्यादिश्रुतिभिर्वेदनस्य साक्षात्कारदशापत्तिर्विज्ञायते। 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' 'मद्भक्तिं लभते पराम्' इत्यादिशास्त्रादस्य भक्तिरूपत्वमवगम्यते। तस्माद्भक्तिपर्यायं वेदनं निःश्रेयससाधनमिति निश्चीयते। एवं सति 'तमेवं विद्वानमृत इह भवति' 'भक्त्या लभ्यस्त्वनन्यया' 'भक्त्या त्वनन्यया शक्यः' इति श्रुतिस्मृतयस्सङ्गता भवन्ति ॥

ननु 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः'

'वर्णाश्रमाचारवता पुरुषेण परः पुमान्।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः॥' इति

कर्मैकसाध्यत्वं निःश्रेयसस्यावगम्यते। तत्कथं भक्त्यैकसाध्यत्वम्?

उच्यते—'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इत्यनेन तावन्निःश्रेयसस्य न कर्मसाध्यत्वमुच्यते। अपि तर्हि ज्ञाननिष्ठायाः कर्मसाध्यत्वमुच्यते। 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्यनेनैकार्थ्यात्। तत्र

सिद्धिं प्राप्तो यथा ब्रह्म तथा प्राप्नो निबोध मे।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा॥

इत्यादिना 'मद्भक्तिं लभते पराम्'

'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥'

इत्यन्तेन कर्मणां ज्ञाननिष्ठापरपर्यायसिद्धिहेतुत्वप्रतिपादनाद्ब्रह्मप्राप्तिलक्षणस्य निश्श्रेयसस्य परभक्तिलभ्यत्ववचनाच्च वर्णाश्रमाचारवतेत्यनेनापि त्रैवर्णिकैस्स्ववर्णाश्रमधर्मानुष्ठानेन भगवत्सन्तोषः कर्तव्यः (न ?) प्रकारान्तरेणेत्युच्यते; न तु कर्मणां निश्श्रेयससाधनत्वमिति नात्र कश्चिद्विरोधः॥

अथ स्यात्—उपासनस्य निश्श्रेयससाधनत्वे

'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'।
'ज्ञानं हि सर्वपापानि नाशयिष्यत्यसंशयम्'॥

'ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा।
यथाग्निरुद्धतशिखः कक्षं दहति सानिलः।
तथा चित्तस्थितो विष्णुर्योगिनां सर्वकल्मषम्'॥

इत्यादिश्रुतिस्मृतिभिर्यत्तस्य पापक्षयहेतुत्वमवगम्यते, तदनुपपन्नं स्यात्। न चोभयत्र विनियोगात्तस्योभयफलत्वं युक्तम्; सन्ध्यावन्दनज्योतिष्टोमादीनां कर्मणामुद्गीथाद्युपासनानां चैकफलत्वनियमदर्शनात्॥

अथ सेतुदर्शनचान्द्रायणादिकर्मणामेकस्यैव पापक्षपणपुत्रादिनानाफलसाधनत्वं दृश्यत इति; सत्यम्। तत्र प्रयोगभेद उपपद्यते। इह त्वाप्रायणमावर्तमानस्योपासनस्यैकशास्त्रार्थत्वात्फलभेदो नोपपद्यते। तस्माद्ध्यानस्य पापक्षपणं ब्रह्मप्राप्तिर्वा फलं भवेत्। तत्राप्यक्षीणकल्मषस्य ब्रह्मप्राप्त्यसम्भवात्कल्मषक्षय एवोपासनफलमभ्युपेयमिति नोपासनस्य निश्श्रेयससाधनत्वमिति॥

नैतदेवम्; सकृत्प्रयुक्तस्यैकस्यैवानेकफलत्वोपपत्तेः। एकैको हि मणिमन्त्रौषधादिर्विषं हन्ति। अणिमाद्यैश्वर्यञ्चावहति। परं पीयमानं पयः पित्तमपहन्ति तृषं च वारयति (इति [2]) दृश्यते। वैदिकानामपि कर्मणां सकृदनुष्ठितानां नानाफलत्वमवगम्यते। 'ज्योतिष्टोमेन स्वर्गकामो यजेतैककामस्सर्वकामोऽपि' इत्यापस्तम्बवचनात्। एकस्मिन्प्रयोगे सर्वान्कामान्कामयीत प्रयोगप्रतीत्यैवैकैकमित्यार्षवचनाच्च। विशेषतो भगवन्माहात्म्यात्तदुपासनस्यानेकफलत्वमुपपन्नम्। स्मर्यते च तस्य नानाफलत्वम्—

'आयासः स्मरणे कोऽस्य स्मृतो यच्छति शोभनम्।
पापक्षयश्च भवति स्मरतां तमहर्निशम्॥

भावं मनोरथं यच्च स्वर्गवन्द्यञ्च यत्पदम्।
ददाति ध्यायतां नित्यमपवर्गप्रदो हरिः॥

रत्नपर्वतमारुह्य यथा रत्नं नरो मुने।
सत्त्वानुरूपमादत्ते तदा कृष्णान्मनोरथम्'॥ इत्यादिभिः

तस्माद्ब्रह्मोपासनस्य सकलकल्मषक्षपणमर्चिरादिगतिर्ब्रह्मप्राप्तिश्चेति त्रीण्यपि फलानि स्युः। तदेवं भक्तिपर्यायं वेदनं निश्श्रेयससाधनमिति सिद्धम्॥

अत्र केचिद्भगवद्गुणप्रवीणा एवं वर्णयन्ति—यतोऽभ्युदयनिश्श्रेयससिद्धिस्स धर्मः। स च द्विविधः सिद्धः साध्यश्चेति। तत्र साध्यो यागदानहोमोपासनादिः। सिद्धो ज्ञानशक्तिबलैश्वर्यादिगुणसम्पन्नो भगवान्। 'कृष्णं धर्मं सनातनम्' 'स हि धर्मस्सनातनः' इत्यादिस्मरणात्। तस्यापवर्गसाधनत्वं श्रूयते। 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति। स्मर्यते च—

'शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः।
तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम्॥

सोऽहं त्वां शरणमपारमप्रमेयं सम्प्राप्तः परमपदं यतो न किञ्चित्।
संसारश्रमपरितापतप्तचेता निर्वाणे परिणत धाम्नि साभिलाषे॥'

इत्यादिभिः। तस्माद्भगवानप्युपायतयोपादेयः। तदुपादानं नाम तत्प्रपदनम्। निवेदनं निक्षेपो न्यासः प्रपदनमिति पर्यायाः। तच्च तदेकोपायत्वप्रार्थनलक्षणम्। तत्र ये संसारोद्विग्नमानसाः भगवच्चरणद्वन्द्वाभिलाषिण उक्तलक्षणसाध्योपायेऽधिकारशक्तिवाञ्छानिवेशनं न लभन्ते, ते भगवत्प्रसादेन तस्मिन्विस्रम्भशालिनस्तमेवोपाददते। सोऽपि तेषां गुणदोषावविगणय्य योगक्षेमं विदधाति। यत एवमाह—

'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।'
'मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चन॥' इति॥

न चैतदितरोपायोपादानवद्देशकालादिनियमापेक्षम्; प्रपदनीयमाहात्म्यात्। द्रुपदात्मजावृत्तान्तोऽपि भगवत्प्रपदनस्य नियमानपेक्षत्वं द्योतयति। सा हि स्त्रीधर्मिणी सत्येव परिषदि परपरिभवापजिहीर्षया भगवन्तं प्रापद्यत। सोऽपि तस्याः परिभवमसन्निधान एवापाचकारेति हि पञ्चमाम्नायप्रसिद्धिः। तत्प्रपदनं प्रपदनीयपुरुषविशेषेषु नियमा(मो?)पेतमपि क्रियते। यथा सागरतरणाभिलाषिणा भगवता दशरथात्मजेन प्राङ्मुखत्वदर्भासनादिनियमोपेतेन वरुणं प्रति। तदपि प्रपदनीयस्य लाघवेन वा प्रपद्यमानस्य वृत्तशालितया हि(वा?) सञ्जातमित्यवगन्तव्यम्॥

परमपुरुषे प्रपदनीये तु न नियमलेशोऽप्यपेक्षितः। तस्मात्तदनन्यगतिभिस्स एवोपादेयत्वेनोपादेय इति तस्मिन्नेतस्मिन् सिद्धोपाये महाभागधेये महाविस्रम्भशालिनां लोकोत्तराणामेवाधिकारः इति भगवान् **बादरायणः** पूर्वोक्तमुपासनमेवापवर्गसाधनं निरणैषीत् 'आवृत्तिरसकृदुपदेशात्' इत्यादिना। तस्माद्यथाधिकारमुपाय उपादेयः॥

इति नीतिमालायां

निश्श्रेयससाधननिर्णयाधिकारो नवमः॥

श्रीः

## नीतिमालायां

## दशमाधिकार आरभ्यते.



अथ निश्श्रेयसस्वरूपं निर्णीयते—

अविद्याया निवृत्तिं तु केचिन्मोक्षं प्रचक्षते।
निवृत्तसकलोपाधिब्रह्मभावमथापरे॥

अर्चिरादिकया गत्या परञ्ज्योतिरुपेयुषः।
विदुषः स्वात्मयाथात्म्यप्रादुर्भावपुरस्सरम्॥

परमव्योमनिष्ठस्य दिव्यमूर्तेः परात्मनः।
निरङ्कुशं त्वनुभवमाहुस्त्रय्यन्तवित्तमाः॥

अस्मिन्निश्श्रेयसे वादिनो बाह्या विवदन्ते। तथाहि—बौद्धैकदेशा माध्यमिकाः प्रकृष्टशून्यभावनया शून्यभावापत्तिं मोक्षमाचक्षते। योगाचारप्रभृतयस्तु स्वलक्षणभावनया क्षणिकत्वभावनया च विषयोपरागविधुरविज्ञानसन्तानम्। आर्हतास्तु सम्यग्दर्शनचारित्रैः प्रक्षीणाखिलमलस्याविर्भूतसकलगुणस्य लोकान्तरेऽवस्थानम्। अक्षपादकणादमतानुसारिणो वैशेषिका आत्मगुणोच्छेदम्। प्राभाकराश्च तथैव। भाट्टास्तु मनःकरणकेन ज्ञानेनानन्दानुभवम्। विवर्तवादिनोऽविद्यानिवृत्तिम्। उपाध्यवच्छिन्नजीववादिनस्तु निर्मुक्तोपाधेस्तस्य ब्रह्मभावम्। त्रय्यन्तार्थयाथात्म्यविदस्तु उपासनप्रीतपरमपुरुषप्रसादात्प्रक्षीणाखिलपुण्यपापसञ्चयस्यार्चिरादिना मार्गेण परञ्ज्योतिरुपसम्पन्नस्याविर्भूतस्वाभाविकापहतपाप्मत्वादिगुणस्य सविभूतिकभगवद्विषयो नित्यासङ्कुचितापरोक्षानुभवो मोक्ष इति वदन्ति॥

तत्र बौद्धपक्षे बन्धमोक्षान्वयिनः स्थायिनो भोक्तुरभावान्मोक्षो दुर्घटः । अर्हन्मतेऽपि चिद्रूपस्य वा अचिद्रूपस्य वा स्वयं परिणामरहितस्य तस्य स्वतोऽप्रतिसङ्क्रमत्वाच्चेतना(न [१])धिष्ठितत्वाच्च गमनानुपपत्तेस्तत्पूर्वकलोकान्तरावस्थानलक्षणं निश्श्रेयसमनुपपन्नम् ॥

ज्ञानसुखादिगुणोच्छेदलक्षणमोक्षपक्षेऽपि संज्ञा(विसंज्ञ [१])त्वात्सुखानुभवाभावात्तत्स्वरूपाव(पो [१])च्छेदकल्पत्वं मोक्षस्य स्यात्। अथ तत्र सुखाभावेऽपि दुःखाभावस्य विद्यमानत्वात्पुरुषार्थत्वमुच्यते। तन्न; दुःखाभावस्याप्यननुभाव्यत्वेनापुरुषार्थत्वस्यावर्जनीयत्वात्। न हि पाषाणादेर्दुःखाभावः पुरुषार्थतया प्रसिद्धः। भाट्टमतेऽपि संसारदशायां करणाधीनज्ञानस्य विषयाधीनसुखस्य चात्मनो मोक्षदशायामकरणकत्वाच्छब्दादिविषयाधीनत्वाच्च ज्ञानसुखयोरसम्भवादानन्दानुभवो न सम्भवति ॥

अथ तत्रापि मनसो नित्यत्वेन विद्यमानत्वात्स्वरूपस्यानुकूलत्वाच्च ज्ञानानन्दौ सम्भवेताम्। नैवं सम्भवतः; मनसो नित्यत्वेऽप्यात्ममनसोर्विभुत्वाभ्युपगमेनान्यतरकर्मजस्योभयकर्मजस्य वा सयोगस्यानुपपत्तेः ज्ञानोत्पत्त्यसम्भवात्। ज्ञानानन्दयोस्सम्भवेऽपि तयोरुत्पत्तिमत्त्वेनान्तवत्त्वमपि प्रसज्येत ॥

विवर्तवादेऽप्यविद्यानिवृत्तेर्दुर्निरूपत्वात्तस्य निश्श्रेयसत्वं दुरुपपादम्। तथाहि—केयमविद्यानिवृत्तिर्नाम [१] यद्यविद्यायाः प्रध्वंसः, तदा तस्याभावरूपत्वाङ्गीकाराद्घटादितुल्यत्वेन तत्प्रध्वंस इव निवृत्तिशब्देन तस्यावस्थान्तरप्राप्तिरुक्ता स्यात्। प्रध्वंसप्रागभावौ हि द्रव्यस्यावस्थाविशेषौ। मृद्द्रव्यस्य पृथुबुध्नोदराकारत्वं हि घटत्वम्। तस्यैवोत्तरकालभाविनी कपालत्वावस्था प्रध्वंसः। पूर्वकालभाविनी पिण्डत्वावस्था प्रागभावः। मृद्द्रव्यन्तूभयावस्थायामनुवृत्तम्। घट उत्पद्यते नश्यतीति व्यवहारौ तदवस्थानिबन्धनौ; तदतिरिक्तस्य कस्यचिदनुपलम्भात्। एवं सर्वेषु द्रष्टव्यम्। तस्मादविद्यानिवृत्तिरपि तद्द्रव्यस्यावस्थाविशेष इत्यङ्गीकर्तव्यम्। तथा सति तेनैव द्रव्येण ब्रह्म सद्वितीयमापतेत् ॥

अथाविद्या न द्रव्यमित्युच्यते, तथा सति तत्कार्यस्य प्रपञ्चस्यापि न द्रव्यत्वं स्यात्। यदि ब्रह्मैवाविद्यानिवृत्तिरिति मतम्, तदा तस्य नित्यत्वेन ब्रह्मज्ञानवैयर्थ्यं बन्धाभावश्च प्रसज्येत।

अस्त्वविद्यानिवृत्तिः, तथापि तस्य पुरुषैरर्थ्यत्वासम्भवान्न निश्श्रेयसत्वं सिद्ध्यति। तस्याभावरूपत्वेऽपि दुःखनिवृत्तिरूपत्वात्पुरुषार्थत्वं सम्भवतीत्यपि न वाच्यम्; दुःखनिवृत्तेः पुरुषार्थत्वासम्भवस्योक्तत्वात्।

अथ स्यान्नास्माभिरविद्यानिवृत्तिमात्रं निश्श्रेयसमित्युच्यते, किन्तर्हि निवृत्तायामविद्यायां सुखैकतानब्रह्मस्वरूपस्याविर्भावो भवति। स आविर्भावो निश्श्रेयसमिति। तदप्यनुपपन्नम्; आविर्भावस्यैवासम्भवात्। तत्त्वज्ञानात्पूर्वं ब्रह्मणः तिरोधानसम्भवे हि पश्चात्तस्याविर्भावस्सम्भवति। निर्विशेषस्य स्वयम्प्रकाशस्य ब्रह्मणस्तिरोधानं न सम्भवतीति हि पूर्वमेवोक्तम्। ब्रह्मण एव सुखरूपत्वञ्च निरस्तम्। यद्यपि सुखरूपस्य ब्रह्मण आविर्भावः, तथापि तस्य पुरुषार्थत्वन्न सिद्ध्यति; तत्स्वरूपस्यार्थ्यत्वाभावात्। न हि कश्चिदहं भूयासमित्याशास्ते; किन्तु सुखी भूयासमिति॥

स्यान्मतम्—येन सुखसम्बन्ध आशास्यते सुखी भूयासमिति, तेनापि न सुखसम्बन्धोऽर्थ्यते, किन्तर्हि? सुखापरोक्ष्यम्। तत्रापि तस्य विद्यमानत्वात्पुरुषार्थत्वं सम्भवतीति। तच्च नैवम्; विवेकहेत्वभावात्।

अस्तु सुखापरोक्ष्यं पुरुषार्थः; तदपि न सिद्ध्यति। सुखापरोक्ष्यं हि सुखसाक्षात्कारः। साक्षात्कर्तरि ज्ञातरि विद्यमाने हि साक्षात्कारो भवति। तस्मादविद्यानिवृत्तिर्मोक्ष इत्येतन्मतं न समीचीनम्॥

यन्निवृत्तोपाधेर्जीवस्य ब्रह्मभावो मोक्ष इति, तदपि चिन्त्यम्। कोऽयं जीवस्य ब्रह्मभावः? यद्युपाधिविगममात्रं, तदुक्तेन न्यायेन निश्श्रेयसं न स्यात्। अथोपाध्यवच्छिन्नस्यानवच्छिन्नब्रह्मैक्यं तदप्ययुक्तम्; अवच्छेदस्य निरस्तत्वात्। किञ्चायं ब्रह्मभावः उपाधिविच्छेदात्प्रागस्ति न वा? अस्ति चेदुपाधिविशेषव्यतिरेकेण न साधनानुष्ठानसाध्यं किञ्चिदस्ति। नास्ति चेत्तदानीमविद्यमानस्तत्त्वज्ञानसाध्यस्स कीदृशः? यदि ब्रह्मसारूप्यम्, जीवब्रह्मणोर्मुक्त्यवस्थायां भेदोऽङ्गीकृतः स्यात्। अथ संसारदशायां ब्रह्मविलक्षणस्य जीवस्य पश्चात्तेनैक्यं ब्रह्मभाव इति मतम्, तदसङ्गतम्; विलक्षणस्य द्रव्यस्य द्रव्यान्तरभावानुपपत्तेः। स्मर्यते च जीवस्य परमात्मैक्यनिषेधः।

निष्ठनित्यदिव्यविग्रहपरब्रह्मानुभवोऽवगम्यते। एवमनुभवतो मुक्तस्य 'स एकधा भवति द्विधा भवति स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' 'जक्षन् क्रीडन् रममाणस्सर्वान् लोकानाप्नोति सर्वांश्च कामान्' इत्यादिश्रुतिभिः स्वेच्छानिमित्तबहुशरीरग्रहणं स्वसङ्कल्पायत्तपित्रादिसमुत्थानं भगवद्विभूतिभूतसकललोकानुगतिश्चावगम्यते ॥

एवं मुक्तस्य जगद्व्यापारवर्जं भगवदैश्वर्यं समानम्। न च वाच्यमेवंविधमैश्वर्यं सगुणोपासननिष्ठस्य तथाविध ब्रह्म प्राप्नुवतो मुक्तस्य; निर्गुणोपासननिष्ठस्य त्वाविर्भूतस्वरूपस्य विदुष· 'तमेवं विद्वानमृत इह भवति' 'अत्र ब्रह्म समश्नुते' इतीहैव ब्रह्मप्राप्तिवचनादिति। 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षन् क्रीडन् रममाण' इति परविद्यानिष्ठस्याविर्भूतस्वरूपस्यैव भोगविहरणादिश्रवणात्परविद्यानिष्ठानामर्चिरादिगतिश्रवणाच्च। न च निर्गुणोपासन नाम किञ्चिदस्ति; 'आनन्दादय· प्रधानस्य' इति सर्वासु विद्यास्वानन्दादिगुणानामुपसंहारात्। ब्रह्मणस्सगुणत्वनिर्णयाच्च।

न च मुक्तस्य भोगविहरणादिसम्भवे सति रागादयोऽवर्जनीयाः स्यु·। ते च दुःखानुषक्ता भवन्ति। ततश्च पुरुषार्थत्व मोक्षस्य न स्यात्। उच्यते—सर्वत्र न रागादयो दुःखानुषक्ताः। कर्मनिमित्तानां तेषां दुःखावहत्वात्। ते प्रतिहतकार्याः पुरुषं क्लिश्यन्ति। ये त्वकर्मनिमित्ताः निरर्गळाः कार्यं कुर्वन्ति, ते सविभूतिकभगवदनुभवानुगुणत्वात्प्रत्युत सुखायैव भवन्तीति न किञ्चिदेतत्। अतः परमव्योमनिष्ठदिव्यविग्रहं भगवन्तमनुभवतो मुक्तस्यैश्वर्यं नानुपपन्नम्। न च भगवतो देशविशेषो दिव्यविग्रहश्च नास्तीति वक्तुं शक्यम्; 'ऋचो अक्षरे परमे व्योमन् यस्मिन्देवा अधिविश्वे निषेदुः' 'विज्ञानसारथिर्यस्तु, मनः प्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' 'सदापश्यन्ति सूरयः' 'दिव्यं स्थानमजरं चाप्रमेयम्।'

'वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पति· ।
आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैस्सह ॥'

'न तस्य प्राकृता मूर्तिः' 'न पञ्चभूतसंस्थानो देहोऽस्य परमात्मन·' इत्यादिश्रुतिस्मृतिभिर्विशिष्टदेशदेहाद्यवगतेः। एवंविधब्रह्मानुभवरूपस्य निश्श्रेयसस्य 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते'

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता ।
सर्गेऽपि नोपजायन्ते प्रळये न व्यथन्ति च ॥'

इत्यादिश्रुतिस्मृतिभिर्नित्यत्वञ्चावगम्यते। तदेवमसङ्कुचितो ब्रह्मानुभवो मोक्ष.॥

किञ्चान्यत्—अयं ब्रह्मानुभवः परिचर्यारसावहश्च भवति; प्रत्यक्परमात्मनोः शेषशेषिभावस्य स्वरूपप्रयुक्तत्वात्। पारार्थ्यलक्षणं हि शेषत्वम्। अत· शेषभूतो मुक्तः स्वप्रयुक्तेन केनचिदतिशयेन हि शेषिणं सयोजयति, अकिञ्चित्करस्य शेषत्वानुपपत्तेः।

अथ स्यात्—अयमात्मा संसारदशायामाध्यात्मिकादिदुःखैरतितप्तः कथमस्मादुत्तीर्णः सुखी भूयासम्' इति हि खलु खनिवृत्ति सुखप्राप्तिञ्चार्थयमान· मोक्षसाधनमन्वतिष्ठत्। सोऽयमपवर्गसमये स्वस्य दुःखमनादृत्य कथं परसन्तोष कुरुते। एव सति तत्क्रतुन्यायोऽपि भज्येत। किञ्च लोके सर्वैः स्वातन्त्र्य प्रशस्यते। पारतन्त्र्य निन्द्यते। शास्त्रेण पारतन्त्र्य निन्दापूर्वक निषिध्यते। 'सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्' इति। तस्मादस्य निश्श्रेयसत्वमनुपपन्नमिति॥

नैतदेवम्; भगवत्परिचर्याया निरतिशयसुखावहत्वात्। सुखं स्वाधीनं पूर्वमाशासितम्। निवृत्तकल्मषस्यात्मनो भगवानत्यर्थप्रिय इति तत्परिचर्या निरतिशयसुखं भवति॥ तस्मात्स्वसुखमेव पूर्वमुद्दिष्टं मोक्षदशायां सिद्ध भवति।

यदुक्तं लोके स्वातन्त्र्यं प्रशस्यं पारतन्त्र्य निन्दितञ्चेति; एतन्न सार्वत्रिकम्; अप्राप्तषोडशवर्षाणां पुत्राणां पितृपारतन्त्र्यस्य, स्त्रीणा भर्तृपारतन्त्र्यस्य च श्लाघ्यत्वात्। तेषामेव स्वातन्त्र्यस्य निन्दितत्वाच्च। सेवा श्ववृत्तिराख्यातेत्यनेनाप्यनर्थहेतुभूतान्यसेवैव निषिध्यते, न सेवामात्रम्। इतरथा हि अन्तेवासिनामाचार्यसेवाया अशास्त्रीयत्वप्रसङ्गात्। तस्माज्ज्ञानानन्दाद्यसङ्ख्येयकल्याणगुणगणस्य सर्वस्वामिन. परमपुरुषस्यानुभवः शेषभूतस्य मुक्तस्य परिचर्यारसमावहतीति तथाविधो भगवदनुभव· परमनिश्श्रेयसमिति सर्वं समञ्जसम्॥

इति श्रीनारायणार्यानुगृहीतायां नीतिमालाया निश्श्रेयसनिर्णयाधिकारो दशम·॥

नीतिमाला सम्पूर्णा॥



## ERRATA

| Page | Line | For | Read |
|---|---|---|---|
| 3 | 6 | तस्यावन्तर | तस्यावान्तर |
| 5 | 3 | षन्ताति | षन्तीति |
| ,, | 14 | तत्रोपसान | तत्रोपासन |
| 8 | 8 | कार्यज्ञानबुद्धि | कार्यबुद्धि |
| 9 | 6 | वाक्यसमनन्तर | वाक्यश्रवणसमनन्तर |
| 12 | 20 | यदुक्त | यदुक्तम्— |
| 13 | 1 | वाप्तिः | वाप्तेः |
| 14 | 5 | तद्ब्रह्म' इति इति | तद्ब्रह्मेति' इति |
| ,, | 8 | देहोऽयम् | देवोऽयम् |
| ,, | 11 | त्वस्य वा | त्वस्य चा |
| ,, | 17 | तस्मात् सुदुर्निरूपम् | तस्मात्सद्दुर्निरूपम् |
| 15 | 21 | नेति नेति' | नेति नेति' इति |
| 17 | 18 | तज्जलानीति | तज्जलानिति |
| 18 | 3 | निकास्सत्य | निकास्सत्य (श्शक्य ?) |
| 20 | 21 | मस्मद्भिन्न | मस्माद्भिन्न |
| 23 | 17 | विषयम् | विषयो |
| 25 | 1 | केनचिद् | केनचित् |
| ,, | 2 | प्रतिपपन्ने | प्रतिपन्ने |
| ,, | 16 | वं | त्वं |
| ,, | 19 | णाया | णीया |
| ,, | 21 | मनिर्वचनीया | मनिर्वचनीया सत्या वा ? |
| 26 | 6 | सौम्ये | सोम्ये |
| 29 | 12 | व्यावृत्योभिन्ना | व्यावृत्त्योर्भिन्ना |
| ,, | ,, | वृ (व्य) त्ति | वृति (व्यक्ति ?) |
| ,, | 19 | रागान्तुक | रागन्तुक |
| ,, | 23 | श्रवणात्तयो | श्रवणात् । तयो |

| Page | Line | For | Read |
|---|---|---|---|
| 30 | 11 | इत्यवसेयुः | इत्यवस्येयुः |
| 31 | 6 | सद्त् | सद् |
| 32 | ,, | त्मना विभागं | त्मना अविभागं |
| 33 | 7 | नुवृत्तेः। स | नुवृत्तेस्स |
| 34 | 6 | साम्येद् | सोम्येद |
| ,, | 13 | परब्रशब्द | परब्रह्मशब्द |
| ,, | 15 | प्रक्रियबा | प्रक्रियया |
| 35 | 6 | मद्रुपेणा | मद्रूपेणा |
| ,, | 9 | प्रथगमात्मानं | पृथगात्मानं |
| 36 | 3 | राद्यवस्था | राद्यावस्था |
| ,, | 8 | स्वगमन्त्र | स्वगमात्र |
| 37 | ,, | वाचा | वाचो |
| 38 | 23 | महाविभूतिस्सुवीर्यः | महावबोधसुवीर्य |
| 39 | 2 | कुर्वन्ती | कुर्वती |
| ,, | 8 | परमकाश | परमाकाश |
| ,, | 14 | सूरिणां | सूरीणां |
| ,, | 17 | शरीरत्व | शरीरित्व |
| 40 | ,, | तेषां न स्व | तेषां न (तु ?) स्व |
| ,, | 24 | तद्वद्वतुषु | तद्वद्वस्तुषु |
| ,, | 21 | शराराणा | शरीराणा |
| 42 | 4 | तद्वता | तद्वतो |
| ,, | 20 | समाना | सामाना |
| ,, | 22 | मकुरत | मकुरस्त |
| 43 | 3 | उपादानयार्भेद | उपादानयोर्भेद |
| ,, | 16 | माश्वरो | मीश्वरो |
| 46 | 9 | शरिर | शरीर |
| 50 | ,, | पुरुषः नविज्ञा | पुरुषः ' 'न विज्ञा |
| 51 | 7 | प्रद्योतेनैव | प्रद्योतेनैष |
| ,, | ,, | मयति येवे | मति ' 'येवै ' |

| Page | Line | For | Read |
|---|---|---|---|
| 51 | 23 | णोशित्वं | णोंऽशित्व |
| 52 | 1 | आपाधिक | औपाधिक |
| 54 | 8 | व्यापारत्वं | व्यापारवत्त्वं |
| 55 | 1 | निपातनयाः | निपातनयोः |
| ,, | 8 | धायते | धीयते |
| ,, | 10 | तथा | तदा |
| ,, | 12 | यथा | तदा |
| 56 | 6 | गुणान्यव्या | (गुणस्यापि सव्या ?) |
| 57 | 3 | णाप्रवर्ति | ण प्रवर्ति |
| ,, | 17 | द्वेश्यं वा | द्वेश्यं च |
| 58 | 6 | कार्यभिति | कार्यमिति |
| 59 | 11 | यथा | यदा |
| ,, | 12 | प्रयुङ्क्ते | प्रयुङ्क्ते, |
| 60 | 5 | देवान्दर्वि | देवा दर्वि |
| ,, | 13 | देवतादि त | देवतादि व |
| ,, | 16 | सन्तोषफल | सन्तोष (:?) फल |
| ,, | 24 | भूति | भूर्तिं |
| 62 | 9 | जनयति | जनयन्ति |
| ,, | 13 | घटाद्यानात्म | घटाद्यनात्म |
| ,, | 16 | वधरित शक्तितात्पर्यनिश्चय—वधारितशक्तितात्पर्य | |
| 63 | 8 | साध्यत्वा | बाध्यत्वा |
| ,, | 21 | चेति। तत्र | चेति। (योगः प्रकृते ज्ञान योगः ध्यानम् ?) तत्र. |
| 64 | 23 | पुरुषार्थप्रियत्वेन | पुरुषात्यर्थप्रियत्वेन |
| ,, | ,, | चेत्य | चात्य |
| 66 | 1 | तथा प्राप्तो | तदाप्नोति |
| 69 | 10, 11 | वैशेषिका आत्म | वैशेषिकात्म |
| 72 | 4 | यदातद्भाव | तद्भावभाव |
| ,, | 5 | भवत्यभेदेभेदश्च तस्माज्ञान | भवत्यभेदो भेदश्च तस्याज्ञान |

| Page | Line | For | Read |
|---|---|---|---|
| 72 | 6 | कथमुपपद्यते | तत्कथमुपपद्यते |
| ” | 14 | च | पक्षे च |
| ” | ” | जक्षन् | जक्षत् |
| ” | 15 | शब्दात्सङ्कल्पा | शब्दात्’ ‘सङ्कल्पा |
| ” | 18 | प्रदूयन्ते—तद्यथा | प्रदूयन्ते’ ‘तद्यथा |
| ” | 23 | सम्पद्यते | सम्पद्य....निष्पद्यते |
| 73 | 14 | क्लिश्यन्ति | क्लेशयन्ति |
| ” | 23 | पञ्चभूत | भूतसङ्घ |

A Index of Kārikās in the Text. Page

B Index of verses quoted in the text.

C Index of Quotations other than Verses.

D Index of Vedic Texts Quoted.

## TEXTUAL READINGS

| Page | Line | Reading in the book | Variant Reading |
|---|---|---|---|
| 1 | 1 | श्रीधरमच्युतम् | श्रीधरमग्रिमम् |
| 4 | 10 | मविरोधयन्नेव | मवबोधयन्नेव हि |
| 5 | 11 | परमपुरुषाराधन | परमपुरुषसमाराधन |
| 9 | 3 | साक्षात्कारेण | साक्षात्कारेण वा |
| ,, | 16 | तेषु तेषु तेषां | तेषु तेष्वर्थेषु तेषां |
| 11 | 2 | कल्पनीयम् | कल्पनीयम् ; नत्वनुपपन्नं विरुद्धं च कल्पनीयम् . |
| ,, | 11 | शरीराद्युपकरणवान् | शरीरेन्द्रियाद्युपकरणेवान् |
| 14 | 8 | देवोऽयं मनुष्योऽयं | देवोऽहम् , मनुष्योऽहम् . |
| 16 | 1 | त्यभिधीयते | त्यवगम्यते |
| ,, | 8 | सामञ्जस्यात् | सामर्थ्यात् |
| 17 | 22 | श्रुत्यन्यथानुपपत्या | श्रुत्यर्थापत्त्या |
| 18 | 7 | इदमेव | इदमेव वाक्यं |
| 19 | 13 | प्रतियोगिस्मरण | प्रतियोगिग्रहणस्मरण |
| ,, | 14 | सम्भवति | भवति |
| ,, | 18 | भाव्यभयहेतु | भाव्युभयव्यवहारहेतु |
| ,, | 24 | श्रयणीयः | श्रयणीयम् |
| 20 | 13 | संस्थानेन | सास्नादिसंस्थानेन |
| 21 | 3 | व्यावृत्तता | व्यावृत्तिः |
| ,, | 9 | याथात्म्य | याथार्थ्य |
| ,, | 13 | नुपपत्त्या | नुपपत्त्या च |
| 23 | 8 | ज्ञानसिद्धिः | ज्ञानं सिद्ध्यति |
| ,, | 18 | भासार्थमज्ञान | भासार्थं हि अज्ञान |
| 24 | 3 | दोषानतिवृत्तिः | दोषानुवृत्तिः |
| 63 | 76 | ज्ञानेन निवर्त्यंते | ज्ञानेन तन्निवर्त्यंते |

## NOTES

Page 30 Line 11.

Cf Jigñāsādhikarana in *Śrī Bhāsya*

" निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् ।
भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥
अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति ।
अपसर्पेदसौ मोक्षकथा प्रस्तावगधतः ॥
मयि नष्टेऽपि मत्तोऽन्या काचित् ज्ञप्तिरवस्थिता ।
इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥"

Compare also *Siddhitraya* of Yāmunācārya, pp 60-1 (Annamalai University Edition)

" नहि मयि नष्टेऽपि कोऽपि प्रकाशः स्थास्यतीति कश्चित्प्रेक्षावान्प्रयस्यति ॥"

Page 44 Line 7.

Cf Vedānta Deśika's *Tātparya Candrikā*, an elaborate commentary on *Gītā Bhāṣya* by Bhagavān Rāmānuja

" नच लोके निमित्तोपादानभेददर्शनमात्राद्विरोधः; लौकिककारणविलक्षणत्वाच्छ्रुतिसिद्धस्य ब्रह्मणः अन्ततो वैशेषिकादिभिरपि घटेश्वरगतसंयोगविभागद्वित्वपृथक्त्वादिकार्येष्वीश्वरस्यैव निमित्तत्वमुपादानत्वं चाभ्युपगतमिति नास्मन्मते दोषः । तथा बुद्धिपूर्वकसुखोत्पादनादावपि द्रष्टव्यम् ॥"

Page 47, Line 20.

Cf. Vedānta Deśika's *Paramatabhanga* in the chapter *Lokāyatika Bhanga*—

" ஆகையால பலவாய் கரணங்களாய் தோற்றுகிற चक्षुरादिகளிற் காட்டில व्यतिरिक्तனை ஆத்மா ப்ரத்யக்ஷன. கண காணுகின்றது செவி கேளாநின்றது என்றுபோலே சொலலும व्यपदेशங்களும உपचारத்தாலே என்னுமிடம் என கண காணுகின்றதென்கையாலே सिद्धम् , सत्यतपாவின் வாக்யம शरणागतरक्षणाभिसंधिயாலே अन्यपरम् ॥"

Page 59.

For a refutation of the Bhātta view see Vedānta Deśika's *Seśvara Mīmāmsā*, p 15

" तथा च शाबरमुत्स्वप्नायितम् " etc

" यत्तु शब्दभावनेति कुमारिलकुसृतिः " etc.

## By the same Authors

1 NYĀYAKULIŚA of Ātreya Rāmānuja with Introduction and Notes.

> "I read through your *Nyāyakuliśa* and congratulate you on its publication It will be a valuable addition to the Viśistādvaita classics now available to the reading public in critical editions "
>
> Sir S Radhakrishnan,
> *Spalding Professor of Eastern Ethics and Religion*

> "We owe a debt of deep gratitude to the editors for bringing out so beautiful and reliable an edition of *Nyāyakuliśa* and to the authorities for giving them the necessary assistance to do so It is a high standard of editorial competence that is set here ......"
>
> Prof M Hiriyanna.

> " .. splendid edition of a valuable Viśiṣṭādvaita treatise. One has only to read the clear summary (in English and Sanskrit) which the editors have prefaced to realise the importance of the work . The text is magnificently edited and printed with full indexes and a table of contents Truly an ideal edition "
>
> *The New Review.*

2 SIDDHITRAYA of Yāmunācārya with English Translation and Notes.

3 VEDĀRTHA-SAMGRAHA of Bhagavān Rāmānuja with English translation and Notes.